रामानंद सागर कृत

# रामायण

# चित्र-कथा

१२ विभागों में । हिंदी और अंग्रेज़ी में ।




प्रति विभाग का मूल्य ५ रुपये



**चन्दामामा विजया कम्बाइन्स**
१८८, एन्.एस्.के. मार्ग, वडपलनी, मद्रास ६०० ०२६ द्वारा प्रकाशित

अनुमति प्राप्त



**सागर एन्टरप्राइजस्**
नटराज स्टुडिओज, १९४ अंधेरी कुर्ला रोड, मुंबई-४०० ०६९.



**ग्रंथ-क्रमांक १ अब समाचारपत्र-विक्रेताओं के पास उपलब्ध**

जिज्ञासा –

# गत्यर्थकत्वनिर्णयः

आचार्यः- वत्स! कर्तरि क्तप्रत्ययः मया बोधितः खलु? तस्य सारं वदतु।

शिष्यः- सकर्मककर्तरिप्रयोगे भूते क्तप्रत्यययोजनसन्दर्भे जागरूकता अपेक्षिता। धातुः गत्यर्थकः चेदेव भूते क्तप्रत्ययः योजनीयः। अन्यथा न। किन्तु इतरत्र – तन्नाम अकर्मककर्तरिप्रयोगे, कर्मणिप्रयोगे, भावेप्रयोगे च – सर्वत्र क्तप्रत्ययः कर्तुं शक्यते।

आ - एषः विषयः सुस्पष्टम् अवगतः अस्ति भवता। इदानीं मम अग्रिमः प्रश्नः– 'धातोः गत्यर्थकत्वं कथं जानाति भवान्?' इति।

शि - कथम् इति? धात्वर्थनिर्देशः प्राचीनैः कृतः। यत्र यत्र तैः गतिः इति अर्थः निर्दिष्टः ते सर्वे गत्यर्थकाः। यथा– गम्लृ-गतौ (गच्छति), अट-गतौ (अटति) सृ-गतौ (सरति), चल-गतौ (चलति) इत्यादयः।

आ - युक्तम् उत्तरं दत्तं भवता। तर्हि मम अपरः प्रश्नः– 'रामः गृहं प्राप्तः' इति वाक्यं शुद्धम्, उत अशुद्धम्?

शि - प्राप्तः इत्यत्र क्तप्रत्ययः। प्राप्नोतेः सकर्मकत्वम्। किन्तु गत्यर्थकत्वं नास्ति। अतः 'रामः गृहं प्राप्तः' इति अशुद्धम्। 'रामः गृहं प्राप्तवान्' इत्येव वक्तव्यम्। एवं ननु?

आ - भवतः चिन्तनरीतिः युक्ता। किन्तु 'रामः गृहं प्राप्तः' इति वाक्यं शुद्धम् एव।

शि - तत् कथम्?

आ - प्राप्तिः गमनं विना न सम्भवति खलु? गमनपूर्विका एव हि प्राप्तिः। अतः प्राप्नोतेः अपि गत्यर्थकत्वम् एव अङ्गीक्रियते अस्माभिः। तत्कारणतः तस्य सकर्मकत्वेऽपि गत्यर्थकत्वात् कर्तरि क्तप्रत्ययः।

शि - अत्र प्रमाणं किम् अस्ति श्रीमन्?

आ - प्राचीनाः प्रयोगाः, शास्त्रकाराणां वचनानि च। यथा–

* प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः।

– वेणीसंहारे (५-२५)

* प्राप्ता वयं पर्वतसार्वभौमम्।

– यादवाभ्युदये (१८-३३)

* गङ्गां प्राप्तः– 'आप्लृ व्याप्तौ' उपसर्गवशात् गतौ वर्तते।

– बालमनोरमाटीका

* प्राप्तम् उदकं यं सः प्राप्तोदको ग्रामः।

– सिद्धान्तकौमुदी

शि - श्रीमन्! एतादृशः अन्यः धातुः अस्ति वा?

आ - आम्। प्रविशति इत्यत्र अपि एवम् एव। गमनपूर्वकं प्रवेशः भवति इत्यतः प्रविशतेः गत्यर्थकत्वम्। अतः 'गृहं प्रविष्टः' इति वक्तुं शक्नुमः वयम्। अत्र कविप्रयोगः यथा–

स्वस्यैव तन्व्या हृदयं प्रविष्टः।

– नैषधीयचरितम् (६-३०)

'प्रतिष्ठते' इत्यत्र गत्यर्थकत्वात्सकर्मकत्वम् इति मया पूर्वं कदाचित् उक्तम् आसीत् खलु? अतः 'नगरं प्रस्थितः' 'ग्रामं प्रस्थितः' इत्यादयः प्रयोगाः भवन्ति।

शि - श्रीमन्! गत्यर्थाभावे अपि 'प्रस्थितः' इति रूपं कर्तरि भवति एव खलु? यतः तस्य अकर्मकत्वम् अस्ति। अकर्मकाश्च कर्तरि क्तप्रत्ययं प्राप्नुवन्ति एव।

आ - एवं प्रकरणबलात् अपि गत्यर्थकत्वं निर्णेतव्यं भवति। अतः 'सकर्मकस्थले अत्र कर्तरि क्तप्रत्ययः भवति, उत न' इति निर्णयात् पूर्वं गत्यर्थकत्वं, गत्यर्थकसम्बन्धः वा अस्ति किम् इति प्रथमं द्रष्टव्यम्। अन्यथा निर्दुष्टम् अपि प्रयोगं दुष्टम् इति भावयेम वयम्।

A CHANDAMAMA PUBLICATION

# चन्दमामा

संस्थापकः – **'चक्रपाणिः'** सञ्चालकः – **'नागिरेड्डी'**

'एकविंशतितमं शतकम् आसन्नम् अस्ति। तस्मिन् कालखण्डे तान्त्रिकविज्ञानक्षेत्रे अनूह्या पुरोगतिः सेत्स्यति। तदर्थम् अस्माभिः मानसिकतया सिद्धैः भाव्यम्। व्यावहारिकदृष्ट्या भाषादृष्ट्या अपि सन्नाहः अस्माकं स्यात्। तान् अपूर्वान् तान्त्रिकविचारान् समर्थतया प्रकाशयितुम् अस्माकं भाषा अर्हा स्यात्। अन्यथा वयम् इतःपरम् अपि द्वितीयश्रेणीकस्य राष्ट्रस्य तृतीयश्रेणीकाः प्रजाः एव तिष्ठामः' इति कश्चित् चिन्तकः स्वाभिप्रायं प्रकटयति स्वकीये लेखने।

एतया दृष्ट्या संस्कृतक्षेत्रे अपि किमपि करणीयम् अस्ति किम्? यदि संस्कृतभाषायाः वर्धनम् इष्यते तर्हि तत्रापि सन्नाहः अनिवार्यः। अन्यथा भाषा 'कालबाह्या' इति नाम प्राप्य जनानाम् अनादरपात्रताम् आप्नुयात्।

किं तान्त्रिकक्षेत्रीयाः अपि विचाराः संस्कृतेन लीलया प्रकटिताः भवेयुः? अवश्यं भवेयुः, यदि संस्कृतज्ञाः इच्छन्ति, प्रयतन्ते च। विचारप्रकटनार्थम् अपेक्षितानां शब्दानां निर्माणे संस्कृतस्य तु अनितरसाधारणं सामर्थ्यम् अस्ति। तादृशं भाषासामर्थ्यम् उपयोक्तुं संस्कृतज्ञानाम् अस्माकम् अपि काचित् योग्यता भवेत् खलु? सा च योग्यता सिध्यति – व्यवहारेण।

सम्पुटः–६ अगस्ट्–१९८९ सञ्चिका–५

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



रसप्रश्नाः–

# सेतुबन्धात् पूर्वम्

(रावणपक्षं परित्यज्य आगतः विभीषणः रामं शरणं गतवान्। पूर्वापरं विविच्य रामः विभीषणाय अभयं दत्तवान्। विभीषणः रामपक्षीयः जातः। अग्रे किं करणीयम् इति विषये समालोचनं जातम्। सेतुबन्धात् पूर्वं काश्चन घटनाः प्रवृत्ताः। ताः आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति – वाल्मीकिरामायणकथानुसारम्। युक्तम् उत्तरं जानन्तु।)

I. 'समुद्रतरणार्थं मार्गं सूचयतु' इति विभीषणं कः प्रार्थितवान्?

II. विभीषणः उत्तररूपेण किम् उक्तवान्?

III. 'समुद्रस्य अपरस्मिन् तीरे रामसेना आगत्य स्थिता अस्ति' इति रावणं कः सूचितवान्?

IV. 'रामस्य पक्षं परित्यज्य किष्किन्धां प्रतिगच्छतु' इत्येतं रावणसन्देशं सुग्रीवाय कः नीतवान्?

(अ) सः केन रूपेण गतवान्?

(आ) वानराः तं बद्ध्वा पुनः त्यक्त्वा पुनः किमर्थं बद्धवन्तः?

(इ) तस्य बन्धविमोचनं कदा जातम्?

V. सामोपायं तिरस्कृतवन्तं समुद्रम् अभिलक्ष्य क्रुद्धः रामः किम् अस्त्रं प्रयोक्तुम् उद्युक्तः?

(अ) रामः तत् अस्त्रं कुत्र प्रयुक्तवान्?

(आ) किमर्थं तत्र प्रयुक्तवान् सः?

(इ) अनन्तरकाले तस्य स्थलस्य किं नाम प्रसिद्धम् अभवत्?

उत्तराणि–

I – सुग्रीवः हनूमान् च।

II – समुद्रः शरणं प्रार्थनीयः इति। III – चारः शार्दूलः

IV – शुकः। (अ) शुकरूपेण। (आ) सः उपरि स्थित्वा रामबलं परिशीलयन् आसीत् इत्यतः। (इ) लङ्कातीरस्य प्राप्तेः अनन्तरम्। V – ब्राह्मम् अस्त्रम्। (अ) द्रुमकुल्यनामके स्थले। (आ) नीचैः दस्युभिः तत् आक्रान्तम् आसीत् इत्यतः। (इ) 'व्रणकूपः' इति।

# रसवार्ताः



## मशकाः जानन्ति कथम्?

अन्धकारे अपि मशकाः मनुष्यस्य उपस्थितिं ज्ञात्वा कथं दशन्ति? एतद्विषये एषु दिनेषु प्रवृत्तं संशोधनं सूचयति यत् मनुष्याणां शरीरात् निर्गच्छतः तापस्य कश्चन गन्धः भवति; स च गन्धः मशकान् आकर्षति इति।

## क्ष-किरणयुतं नेत्रम्!

रोगस्य निदानं ज्ञातुं वैद्याः बहुधा क्ष-किरणपरीक्षायाः उपयोगं स्वीकुर्वन्ति इति तु सर्वविदितम्। किन्तु बीजिंग्देशीयः २४ वर्षीयः डा।। जेन्त्सियांग्लिंग् स्वनेत्राभ्याम् एव सम्मुखं स्थितायाः व्यक्तेः शरीरे स्थितानि अस्थीनि साक्षात् द्रष्टुं शक्नोति। जन्मतः आरभ्य तस्य एतादृशी अपूर्वा दृष्टिशक्तिः आसीत् इति श्रूयते। किन्तु एतत् कथम् इति तु कोऽपि न जानाति।





## वामनेषु वामनः दिवङ्गतः

वामनेषु एव वामनः स्काट्ल्याण्ड्देशीयः टोनी (२१.५") स्वस्य षट्चत्वारिंशत्तमे वर्षे दिवङ्गतः।

## द्विचक्रिकया प्रपञ्चपर्यटनम्!

बेङ्गलूरुनगरीयौ वेङ्कटेश कामत्, बालकृष्णः च एन्.सि.सि. साहाय्येन ६०,००० कि.मी. दूरं प्रयाणं कृतवन्तौ। ३०,००० कि.मी. दूरं द्विचक्रिकया, अवशिष्टं दूरं महानौकया विमानेन वा गच्छन्तौ तौ नवमासात्मके अवधौ २५ देशान् दृष्टवन्तौ। ईजिप्ट्देशे मरुभूमौ प्रयाणसमये केचन लुण्ठाकाः आगत्य एतयोः मार्गम् अवरुध्य गातुम् आदिष्टवन्तः। एतौ सुमधुरं गायन्तौ तेषां हस्ततः पारितोषिकं प्राप्तवन्तौ!



# अपूर्वः वक्ता

कदाचित् पाञ्चालराजः पाण्ड्यराजं प्रति वार्तां प्रेषितवान् यत् भवद्देशतः कश्चन प्रसिद्धः वक्ता अस्मद्राज्ये प्रचलिष्यन्त्याः महासभायाः निमित्तं प्रेषणीयः इति।

केनापि उपायेन एवम् आगतस्य वक्तुः अपमाननं कृत्वा प्रतीकारः साधनीयः इति पाञ्चालराजस्य आशयः।

पाञ्चालराजेन प्रेषितां वार्तां ज्ञात्वा पाण्ड्यराजः मन्त्रिणं पृष्टवान् – "कं प्रेषयाम वयम्?" इति।

"विदूषकः एव गच्छतु। विदूषके स्थिते, अन्यस्य विषये चिन्तनं किमर्थम्?" इति पृष्टवान् मन्त्री।

विदूषकस्य महत् पाण्डित्यं तु नास्ति। तथापि सः समयस्फूर्तियुक्तः, जनरञ्जकतया भाषणं कर्तुं समर्थः चापि।

"अस्माकं विदूषकः सहस्राधिकानां श्रोतॄणां पुरतः यया स्फूर्त्या भाषणं करोति तया एव स्फूर्त्या द्वित्राणां श्रोतॄणां पुरतः अपि भाषणं कर्तुं समर्थः। श्रोतॄणां स्तरं क्षणमात्रेण ज्ञात्वा सः घण्टां यावत् अपि निरर्गलं भाषणं कर्तुं समर्थः। कश्चन पण्डितः शास्त्रविषये वैदुष्यपूर्णं भाषणं कुर्यात्। किन्तु परिस्थित्यनुगुणं भाषणं कर्तुं विदूषकः एकः एव समर्थः" इति उक्तवान् मन्त्री।

पाञ्चालदेशं गतः विदूषकः स्वभाषणवैखरीबलात् न केवलं सभ्यान्, राजानम् अपि वशीकृत्य पारितोषिकं प्राप्य आगतवान्।

एतदनन्तरं पाण्ड्यदेशं प्रति एतादृशम् आह्वानं न आगतम्।






# मित्रस्य उपदेशः

स्वर्णमुखीराज्यस्य राज्ञः मरणस्य अनन्तरं तदीयः पुत्रः सूर्यकान्तः सिंहासनम् आरूढवान्। अल्पे एव काले सः जनप्रियः जातः।

सूर्यकान्तः राज्यपरिपालनसम्बन्धे अनुभविनः मन्त्रिणः धर्मचरणस्य मार्गदर्शनं प्राप्नोति स्म। किन्तु वैयक्तिकजीवनविषये तु आत्मीयेन मित्रेण सुमन्त्रेण सह समालोचनं करोति स्म।

कदाचित् सूर्यकान्तः मृगयार्थम् अरण्यं प्रति प्रस्थितः। तत्समये राज्ञी विद्याधरी तं प्रार्थितवती– "आर्य! अद्य मम जन्मदिनम्। अतः मृगयाविहारं शीघ्रम् एव समाप्य आगच्छतु कृपया" इति।

"तथैव करोमि" इति तां यद्यपि उक्तवान् राजा, तथापि मृगयोत्साहकारणतः सः तस्याः वचनं विस्मृतवान्। महता विलम्बेन प्रत्यागत्य अन्तःपुरं गतवान्।

विलम्बकारणतः राज्ञी विद्याधरी नितरां कुपिता आसीत्। तया एव चिन्तया अन्तःपुरतः बहिः आगतवान् राजा। मित्रं सुमन्त्रं पत्न्याः कोपवार्तां निवेद्य– "इदानीं किं करणीयम्?" इति पृष्टवान् च।

"मित्र! स्त्रियः प्रायः कोपादिकं प्रदर्शयन्त्यः पतिं स्ववशे सदापि स्थापयितुम् इच्छन्ति। एतादृशी प्रवृत्तिः आरम्भे एव निवारणीया। अतः इदानीं भवान् मौनं तिष्ठतु। तदा सहजतया राज्ञी शान्ता भविष्यति। इतः परं कोपं न प्रदर्शयिष्यति च " इति उक्तवान् सुमन्त्रः।

मित्रस्य सूचना युक्ता अस्ति इति भावितवान् सूर्यकान्तः। अतः सः विद्याधर्या सह वार्तालापम् अकुर्वन् मौनं स्थितवान्। दिनद्वयस्य अनन्तरं सा पत्युः समीपम् आगत्य

"श्रीमाता"



उक्तवती– "आर्य! मनःखेदं जनितवती अहम्। कृपया मां क्षाम्यतु" इति।

सुमन्त्रस्य वचनस्य अनुगुणं व्यवहृतम् इत्यतः सम्यक् एव जातम् इति सन्तोषम् अनुभूतवान् राजा। एवम् एव दिनानि अतीतानि। विद्याधरी गर्भवती जाता। तदा सूर्यकान्तः ताम् उक्तवान्– "एतादृशे सन्दर्भे दोहदः कोऽपि भवति एव। किम् आवश्यकम् इति वदतु" इति।

"अपूर्वेण वज्रेण युक्तं हारम् इच्छामि अहम्" इति अपेक्षां प्रकटितवती विद्याधरी। 'तथैव अस्तु' इति अङ्गीकृतवान् राजा।

एतां वार्तां सः स्वमित्रं सुमन्त्रम् उक्तवान्। तदा सुमन्त्रः पृष्टवान्– "तादृशं हारं कारयिष्यामि इति भवता वचनं दत्तं वा?" इति।

"आम्। अतः उत्तमस्य वज्रस्य चयने भवतः साहाय्यम् इच्छामि" इति उक्तवान् राजा सूर्यकान्तः।

"मित्र! स्त्रीणाम् अपेक्षाः अनन्ताः भवन्ति इति वचनं श्रुतं खलु भवता? एका अपेक्षा पूरिता चेत् अपरा प्रकट्यते। अतः अपूर्वस्य वज्रस्य अन्वेषणं व्यर्थम् इति मम आशयः। वचनं तु दत्तम् एव इत्यतः सामान्येन वज्रेण युक्तम् एकं हारं कारयतु, पर्याप्तम्। भवतः आशयं जानती सा पुनः एतादृशीम् अपेक्षां न प्रकटयिष्यति" इति उपदिष्टवान् सुमन्त्रः।

सूर्यकान्तः मित्रस्य उपदेशं पालयन् सामान्येन वज्रेण सहितं हारं कारयित्वा राज्ञ्यै दत्तवान्। वज्रस्य मौल्यं जानती राज्ञी एतेन नितरां खिन्ना। 'इतः परम् एतादृशं किमपि आवश्यकम् इति कदापि न वदिष्यामि' इति निश्चितवती सा।

पुनः कदाचित् सूर्यकान्तः सुमन्त्रः च अक्षक्रीडायां मग्नौ आस्ताम्। तत्समये राज्ञ्याः परिचारिका आगत्य निवेदितवती– "महाराज्ञी महत्या शिरोवेदनया पीड्यमाना अस्ति। भवन्तम् आगन्तुं सूचितवती" इति।

एतत् श्रुत्वा राजा झटिति उत्थाय गन्तुम् उद्युक्तः। तदा सुमन्त्रः तम् उपवेश्य उक्तवान्– "भोः, एवं त्वरया न गन्तव्यम्। स्वविषये पत्युः प्रेम्णः परीक्षार्थं ताः एवं शिरोवेदनादीनां व्याजं प्रदर्शयन्ति। एतादृशी

प्रवृत्तिः न पुरस्करणीया। किञ्चित् विलम्बेन गच्छामः चेदेव अस्माकं गाम्भीर्यं रक्षितं भवति'' इति।

एतां सूचनां युक्तं मन्यमानः राजा परिचारिकाम् उक्तवान्– ''किञ्चित्-कालानन्तरम् आगमिष्यामि इति मया उक्तम् इति राज्ञीं वदतु'' इति।

पत्युः आगमनं प्रतीक्षमाणा राज्ञी परिचारिकया उक्तं श्रुत्वा नितरां खिन्ना। तदा परिचारिका राज्ञीम् उक्तवती– ''महाराज्ञि! मम वचनं श्रुत्वा राजा प्रस्थातुम् उद्युक्तः आसीत्। किन्तु मित्रेण सुमन्त्रेण किमपि उपदिष्टम्। तदा महाराजेन एवं सन्देशः प्रेषितः'' इति।

एतेन विद्याधरी ज्ञातवती यत् एतत्सन्दर्भे, इतः पूर्वं च यत् प्रवृत्तं तत्र सुमन्त्रस्य हस्तक्षेपः अस्ति इति।

महाराज्ञी परिचारिकाद्वारा मन्त्रिणं धर्मचरणम् आनायितवती। तं पृष्टवती च– ''मन्त्रिवर्य! महाराजः वैयक्तिकविषये भवन्तं किमपि पृच्छति वा?'' इति।

''कदापि न। शासनव्यवहारे सः मां किमपि पृच्छति, तावदेव। वैयक्तिकविषयेषु सः मित्रेण सुमन्त्रेण सह समालोचनं करोति'' इति उक्तवान् धर्मचरणः।

राज्ञी अग्रे किमपि वार्तालापं कर्तुम् अनिच्छन्ती मन्त्रिणं प्रेषितवती। पत्युः व्यवहारे सुमन्त्रस्य हस्तक्षेपः अस्ति एव इति



सा सुस्पष्टं ज्ञातवती।

सा सुमन्त्रस्य कुटुम्बस्य विषये वार्ताः सङ्गृहीतवती। एतेन तया ज्ञातं–'सुमन्त्रस्य पत्नी चण्डी। सा कदापि पत्युः वचनं न पालयति। तां योग्ये मार्गे आनेतुम् इच्छन् सुमन्त्रः गृहे कठोरं व्यवहरति। सुमन्त्रस्य द्वौ पुत्रौ। तयोः अन्यतरः महादुष्टः। अपरः साधुस्वभावयुतः' इति।

कदाचित् विद्याधरी पतिम् उक्तवती– ''आर्य! यदा मम कोपः आगतः आसीत् तदा सान्त्वनं करणीयम् इति भावना भवति स्म भवतः मनसि। तथापि मौनं तिष्ठति स्म भवान्। उत्तमवज्रयुक्तः हारः कारणीयः इति इच्छा अस्ति चेदपि सामान्यः हारः एव कारितः। मम शिरोवेदना यदा भवति स्म तदा




भवान् चिन्ताकुलः भवति स्म चेदपि उदासीनतां प्रकटयति स्म। अत्र सर्वत्र अन्यस्य उपदेशः एव कारणम्। अन्यस्य उपदेशं विना बाह्यः व्यवहारः अन्तरङ्गविरुद्धः भवितुं न अर्हति'' इति उक्तवती राज्ञी।

पत्न्याः सूक्ष्मचिन्तनं मनसा श्लाघमानः सूर्यकान्तः उक्तवान्– ''भवत्याः तर्कः युक्तः एव। प्राणसमस्य सुमन्त्रस्य सूचनानुगुणं व्यवहरामि अहम्। तस्य सूचना हिताय एव इति भावना मम'' इति।

''एषः उपदेशः इति मा भावयतु। मित्रं चेदपि सः सर्वेषु विषयेषु समर्थः न भवति। सः कस्मिन् विषये मार्गदर्शनं कर्तुं समर्थः इति प्रथमं ज्ञातव्यम्। सर्वेषु विषयेषु तस्मिन् विश्वासः प्रकटितः चेत् जीवने क्लेशः निश्चितः'' इति उक्तवती विद्याधरी।

''एवं कथयन्त्याः भवत्याः आशयः कः?'' इति पृष्टवान् सूर्यकान्तः।

''प्रभो! पुनः सुमन्त्रः यदा मिलति तदा तस्य पुत्रयोः विषये भवता प्रश्नः करणीयः'' इति सूचयन्ती राज्ञी तस्य पुत्रयोः स्वभावादिकं निवेद्य किं प्रष्टव्यम् इत्यपि सूचितवती।

तद्दिने सायङ्काले सूर्यकान्तः राजोद्याने विहरन् आसीत्। तत्समये सुमन्त्रः तत्र आगतः। सूर्यकान्तराजः तं पृष्टवान्– ''मित्र! भवतः पुत्रद्वयम् अस्ति इति श्रूयते। तयोः स्वभावः कः?'' इति।

''ज्येष्ठः स्वभावेन दुष्टः। द्वितीयः बुद्धिमान्। यत् वदामः तत् पालयति सः'' इति उक्तवान् सुमन्त्रः।

''यदि तौ भवतः वचनं न शृणुतः तर्हि किं करोति भवान्?'' इति पृष्टवान् राजा सूर्यकान्तः।

''ताडने बहवो गुणाः। यदा सः ज्येष्ठः मम वचनं तिरस्करोति तदा तं दण्डयामि अहम्। द्वितीयः तु अनुनयपूर्वकं वदामि चेत् सर्वम् अङ्गीकरोति'' इति उक्तवान् सुमन्त्रः।

''मित्र! मम वैयक्तिकेषु विषयेषु भवान् एव मार्गदर्शकः इति राज्ञ्या ज्ञातम् अस्ति। भवतः पत्नी चण्डी इति सा जानाति। भवान् स्वपत्न्याः विषये यथा कठोरतया व्यवहरति

तथा एव इतरैः अपि व्यवहरणीयम् इति चिन्तयति। एतदनुगुणम् इतरान् उपदिशति अपि। दुष्टे पुत्रे कठोरता, सज्जने च अनुनयः यथा, तथैव स्त्रीणां विषये अपि व्यवहरणीयम्। सर्वत्र कठोरता, सर्वत्र अनुनयः वा न उचितः। एषः विषयः भवन्तं स्मारणीयः इति सा सूचितवती'' इति उक्तवान् सूर्यकान्तः।

एतत् श्रुत्वा क्षणकालं मौनं स्थितवान् सुमन्त्रः। अनन्तरं लज्जया शिरः अवनमय्य सः – ''महाराज! मया क्षमा प्रार्थिता इति तां वदतु। इतः परं वैयक्तिकेषु विषयेषु मां किमपि न पृच्छतु कृपया। महाराज्ञी महाचतुरा, विनयवती औचित्यप्रज्ञावती च। अतः वैयक्तिकेषु व्यवहारेषु तस्याः मार्गदर्शनम् एव प्राप्नोतु। अस्थाने मम प्रवर्तनं भवान् अपि क्षाम्यतु कृपया'' इति उक्त्वा ततः निर्गतवान्।

सूर्यकान्तः विद्याधरीं प्रवृत्तं समग्रं निवेद्य– ''मम वचनं श्रुतवतः तस्य मुखं कान्तिहीनं जातम्। सः भवतीं मां च क्षमां प्रार्थितवान्। एतत्सर्वं किमर्थम् इति तु मया न ज्ञातम्'' इति उक्तवान्।

''तस्य व्यवहारे ज्ञातुम् अशक्यः अंशः कः अस्ति? तस्य पत्नी चण्डी। पत्युः वचनं न कदापि पालयति सा। अनुनयेन पत्न्याः कोपस्य उपशमनं कर्तुं सर्वथा असमर्थः सः तस्याः विषये उपेक्षां कठोरतां च प्रदर्शयन् तां कथञ्चित् निगृह्णन् अस्ति। यदि प्रीतिः प्रदर्श्यते तर्हि तस्याः चण्डित्वं वर्धेत इति तस्य भीतिः। सर्वाः स्त्रियः स्वपत्नीसमानाः भवन्ति इति भावयन् सः तदनुगुणं भवन्तम् उपदिशति स्म। भवान् मया उक्तं यदा तम् उक्तवान् तदा सः आत्मनः अविवेकितां ज्ञातवान्। अतः एव मां क्षमां प्रार्थितवान्। साक्षात् किमपि कथयामि चेत् तस्य अभिमानस्य भङ्गः भवेत् इति आलोच्य अहं भवद्द्वारा वाचितवती। अतः सः मां विनयवतीम् उक्तवान्'' इति उक्तवती विद्याधरी।





# आत्मख्यापनम्

मतङ्गदेशस्य महाराजः महाबलवर्मा। सः स्वस्य देशे शासने प्रगतिं साधयितुम् इष्टवान्। अतः देशं द्वादशधा विभज्य द्वादश प्रजाप्रतिनिधीन् तत्र नियुक्तवान्। एते प्रजाप्रतिनिधयः तत्तद्भागे निवसन्तः तदा तदा तत्तद्भागस्य इतिवृत्तं प्रेषयेयुः इति नियमं कृतवान् सः।

इन्द्रसेनः अपि प्रजाप्रतिनिधिषु अन्यतमः। सः स्वभावेन महालसः। स्थूलोदरः सः सदापि मधुरभक्ष्याणां खादने आसक्तिं प्रदर्शयति।

राज्ञा प्रेषिताःअन्ये प्रजाप्रतिनिधयः साक्षात् स्वक्षेत्रं गत्वा तत्र ग्रामं ग्रामम् अटन्तः प्रजानाम् अपेक्षाः, तत्रत्याः न्यूनताः च सङ्गृहीतवन्तः। इन्द्रसेनः तु ग्रामं ग्रामम् अटितुं न इच्छति। तस्य क्षेत्रे मल्लपुरं नाम समृद्धः ग्रामः अस्ति। तत्र सः स्वस्य वसतिम् उपकल्प्य 'सर्वे ग्रामप्रमुखाः आगत्य मां पश्येयुः' इति आदेशं प्रतिग्रामं प्रेषितवान्।

एतादृशः आदेशः सीतापुरं प्रति अपि आगतः। राजप्रतिनिधेः आदेशं शिरसा वहन्तः ग्रामज्येष्ठाः चत्वारः मल्लपुरं प्रति प्रयाणं कर्तुं सिद्धाः जाताः। एतत् ज्ञात्वा तद्ग्रामवासी रामदेवः महान्तं कोलाहलम् एव उत्पादितवान्।

"राजप्रतिनिधेः एषः व्यवहारः सर्वथा अनुचितः। स्वयं ग्रामं ग्रामं गत्वा तत्रत्या परिस्थितिः प्रत्यक्षं ज्ञातव्या तेन। एषः परमालसः इन्द्रसेनः तु कुत्रचित् उपविश्य ग्रामप्रमुखान् स्वसमीपम् आह्वयन् अस्ति। तस्य आदेशं वयम् अनुसरामः चेत् तत् अस्माकं ग्रामस्य अपमानाय एव। राजप्रतिनिधिः इन्द्रसेनः एव अस्माकं ग्रामम् आगच्छतु नाम। तावत् अस्माभिः तस्य समीपं न गन्तव्यं, न वा किमपि उत्तरं दातव्यम्।

एतदनन्तरम् अपि इन्द्रसेनः उचितं न आचरति चेत् महाराजसमीपं व्यवहारः नेतव्यः। एतत्सन्दर्भे ग्रामीणैः सर्वैः ऐकमत्येन व्यवहर्तव्यम्'' इति सर्वत्र वदन् ग्रामीणान् प्रेरितवान् रामदेवः।

रामदेवः सीतापुरं प्रति सद्यः एव आगत्य स्थितः। तस्य जिह्वा अतीव तीक्ष्णा। विचारवादम् उग्रं प्रतिपादयन् सः अल्पे एव काले जनप्रियतां सम्पादितवान् अस्ति। एतस्य वचनेन प्रेरिताः ग्रामीणाः ग्रामप्रमुखान् दृष्ट्वा 'इन्द्रसेनसमीपं न गन्तव्यम्' इति साग्रहम् उक्तवन्तः। इदानीं ग्रामप्रमुखाः द्वैधीभावेन पीडिताः अभवन्। राजप्रतिनिधिः कुपितः चेत् अनर्थः सम्भवेत् इति एकत्र भीतिः। अपरत्र ग्रामीणानां जनानाम् अभिप्रायं तिरस्कर्तुम् अनिच्छा।

अतः ते राजभटं प्रवृत्तं सर्वं निवेद्य, रामदेवस्य सामर्थ्यम् अपि निवेद्य– ''एतादृशपरिस्थितौ वयं किमपि कर्तुं न शक्नुमः। अस्मद्विषये अन्यथा न चिन्तनीयम् इति इन्द्रसेनवर्यं वदतु'' इति उक्तवन्तः।

ग्रामे प्रवृत्तं सर्वं ज्ञात्वा रामदेवस्य पत्नी पतिम् उक्तवती– ''शासनव्यवहारे विना कारणं प्रवेशः किमर्थं भवतः? अस्मदीयं कर्तव्यं वयं पश्यामः चेत् पर्याप्तं न भवेत् वा? अस्थाने प्रवर्तनं कदापि न करणीयम्'' इति।

''अस्थाने प्रवर्तनं किम् अत्र? अलसः अधिकारी गर्वेण व्यवहरति। अतः ग्रामीणान्



'एतत् न सोढव्यम्' इति बोधितवान्। वयं तस्य अधिकारिणः दासाः न खलु?'' इति पत्नीम् उक्तवान् रामदेवः।

पत्युः वचनं श्रुत्वा पत्नीं मौनं स्थितवती।

एतदनन्तरं सप्ताहाभ्यन्तरे इन्द्रसेनेन प्रेषिताः भटाः आगत्य निवेदितवन्तः– ''इन्द्रसेनवर्यस्य आरोग्यं सम्यक् नास्ति। मल्लपुरे चिकित्सा प्रचलति। चिकित्सासमये एव प्रजानां योगक्षेमः द्रष्टव्यः इति तस्य विचारः। परिस्थितिम् अवगत्य इतरग्रामाणां प्रमुखाः आगत्य समालोचनं कुर्वन्तः सन्ति। इतरैः यथा सहकारः दत्तः तथैव सीतापुरीयैः अपि सहकारः दातव्यः इति सूचितवान् अस्ति इन्द्रसेनः। ग्रामप्रमुखैः सह रामदेवः अपि

आगच्छतु इति अपि सः सूचितवान् अस्ति'' इति।

ग्रामप्रमुखाणाम् इदानीं पुनः समस्या। 'मल्लपुरं प्रति अस्माकं गमनं यः पूर्वं निराकृतवान् सः रामदेवः इदानीं कथं वा आगच्छेत्? आत्मगौरवस्य हानिः इति भावयेत् सः' इति आलोचितवन्तः ते।

परिस्थितिः यथाकथं वा भवतु, रामदेवः तु तैः निवेदनीयः आसीत् एव। अतः ते रामदेवं भटस्य वचनं निवेदितवन्तः।

''अहो! एवं वा? इन्द्रसेनस्य अस्वास्थ्यवार्ता न ज्ञाता आसीत् मया। राजप्रतिनिधेः अस्वास्थ्यसमये सर्वैः साहाय्यं करणीयम् एव। इतरे यदा सहकर्तुं सिद्धाः सन्ति तदा वयं सहकारं निराकुर्मः चेत् तत् अस्माकम् एव अगौरवाय। एतेन समग्रस्य ग्रामस्य गौरवं धूलिसाद्भविष्यति। अतः वयम् अचिरात् एव मल्लपुरं गत्वा तं पश्याम। भवद्भिः सह अहम् अपि निश्चयेन आगमिष्यामि'' इति उक्तवान् रामदेवः।

एतत् श्रुत्वा ग्रामप्रमुखाः समाधानेन निःश्वसितवन्तः। ग्रामप्रमुखैः रामदेवेन च यत् अङ्गीकृतं तत् ग्रामीणानाम् अपि अनुमतम् एव अभवत्।

ततः प्रतिगताः भटाः इन्द्रसेनम् उक्तवन्तः यत् श्वः सीतापुरीयाः ग्रामज्येष्ठाः रामदेवेन सह आगमिष्यन्ति इति। एतत् श्रुत्वा इन्द्रसेनः उच्चैः हसितवान्। तदा तस्य पार्श्वे स्थितः साहाय्यकः पृष्टवान्– ''ग्रामस्य अपमाननम् इति कोलाहलम् उत्पादितवान् रामदेवः इदानीं कथम् आगमनम् अङ्गीकृतवान्? आश्चर्यकरम् एतत्!'' इति।

तदा इन्द्रसेनः उक्तवान्– ''स्वस्य प्रामुख्यख्यापनार्थं रामदेवसदृशाः अवकाशं प्रतीक्षमाणाः भवन्ति। वस्तुतः ग्रामस्य हितं तेषां लक्ष्यं न। प्रसिद्धिप्राप्त्यर्थं ते विनाकारणम् अशान्तिम् उत्पाद्य पुनः परिहारः आत्मना कृतः इति प्रदर्शयन्ति। एतादृशाः सर्वत्र भवन्ति'' इति।






# २

कपाटिकायाः कुञ्चिकाम् अन्विष्यन्तं पितरं सूर्यं सूर्यवेषेण स्थितः सत्यनारायणः औदासीन्येन पश्यन् स्थितवान्।

"कुञ्चिका कुत्र इति किमपि जानाति वा भवान्?" इति पुत्रं पृष्टवान् सूर्यः।

"कुञ्चिकां मत्समीपे स्थापितवान् अस्मि" इति उत्तरं दत्तवान् सत्यनारायणः।

"कुञ्चिकां स्वीकृत्य किं कर्तुम् इच्छति भवान्? ददातु ताम्। बालस्य भवतः कियत् धाष्ट्र्यम्?" इति कोपेन उक्तवान् सूर्यः।

"मया सह सगौरवं व्यवहरतु। पूर्ववत् बालः न अहम् इति स्मरतु। अगौरवेण व्यवहरति चेत् तस्य फलम् अनुभोक्तव्यं भवेत्। इदानीं ताडनाधिकारः मम, न तु भवतः इति जानाति खलु?" इति कठोरस्वरेण उक्तवान् सत्यनारायणः।

पुत्रस्य एतादृशं धाष्ट्र्ययुक्तं व्यवहारम् आश्चर्येण पश्यन् अस्ति सूर्यः।

सत्यनारायणः पितरं पुनः उक्तवान्– "अगौरवेण पश्यन् भवान्, 'मुर्ख! वैधवेय! मन्दबुद्धे!' इत्येवंरूपेण मां सम्बोधयति चेत् पाचिका एव भवतः कर्णलुण्ठनं कुर्यात्। अतः पूर्वापरम् आलोच्य व्यवहरतु। यथाशक्ति अहम् एव एतस्य गृहस्य व्यवहारं निर्वहामि। मध्ये भवतः प्रवेशः मास्तु। इतः पूर्वं कदापि मह्यम् एकं नाणकं वा दत्तवान् आसीत् वा




कारयिष्यति वा?'' इति पृष्टवान् सूर्यः।

''भवान् मद्विषये यथा व्यवहृतवान् तथैव व्यवह्रियते मया अपि। इतः पूर्वं भवान् एतत्सर्वं कर्तुम् अध्यापकं चोदितवान् आसीत् खलु?'' इति उक्तवान् सत्यनारायणः।

क्षणकालम् आलोच्य पृष्टवान् सूर्यः– ''अध्यापकः घोरं व्यवहरति वा?'' इति।

''तदीयव्यवहारस्य कठोरतां किमिति वदामि? ताडनं तस्य प्रियं कार्यम्। 'ताडने बहवो गुणाः' इति तस्य सिद्धान्तः। विना कारणम् अपि सः सर्वान् बालान् ताडयति। पदे पदे ताडनम् एव अध्यापकधर्मः इति भावयति सः'' इति उक्तवान् सत्यनारायणः।

''एवं तर्हि सः माम् अपि निर्दयं ताडयेत् एव'' इति उद्गारं प्रकटितवान् सूर्यः।

''ताडनात् भीतिः किमर्थम्? अध्यापकः यदा मां ताडयति स्म तदा भवान् एव खलु तं पुनरपि ताडनार्थं प्रोत्साहयति स्म? तस्य दुराचारस्य फलम् इदानीम् अनुभोक्तव्यं भवता'' इति उक्तवान् सूर्यनारायणः

'रूपपरिवर्तनात् नितरां सन्तुष्टः एषः दुष्टः बालः इदानीं प्रतीकारं साधयितुं प्रयतमानः अस्ति। कथम् अपि निग्रहणीयः एषः। अन्यथा एषः सर्वम् अस्तव्यस्तं कुर्यात्' इति आलोचितवान् सूर्यः।

सः कोपेन पुत्रम् उक्तवान्– ''रे मूर्ख! अविवेकिन्! भवतः एषः दर्पः अधिककालम् न प्रचलति। अहं कः, भवान् च कः इति सर्वान्

भवान्? अद्य आरभ्य अहम् एव यजमानः। श्वः आरभ्य भवता शाला गन्तव्या। उपाध्यायेन ताडनं यत् दीयते तत् मौनं सोढव्यं च'' इति।

एतत् श्रुत्वा सूर्यः असमाधानेन कोपेन च गर्जितवान्– ''किं वदति भवान्? पञ्चाशद्वर्षीयः ज्येष्ठः अहं शालां गच्छेयम् इति··?'' इति।

''श्रीमन्! कोपेन किमपि प्रयोजनं नास्ति। श्वः आरभ्य शाला तु गन्तव्या एव भवता। अन्यथा अध्यापकः एव स्वयम् आगत्य दण्डेन सम्यक् पूजयित्वा रुदन्तं भवन्तम् आकृष्य नेष्यति'' इति हसन् उक्तवान् सत्यनारायणः।

''अल्पः बालः भवान् एतत्सर्वं

बोधयिष्यामि अहम्। मयि विद्यमाने, स्वेच्छया व्यवहारः तथा सुलभतया न शक्यः इति सम्यक स्मरतु" इति।

एतत् श्रुत्वा सत्यनारायणः उच्चैः हसितवान्। पितुः कोपात् सः किञ्चिदपि न भीतः। "अहो, सर्वान् बोधयिष्यति वा? बोधयतु कामम्। गृहे स्थितान् प्रतिवेशिनः च आहूय बोधयतु। तदा कस्य वचनं प्रमाणं भवति इति स्वयं ज्ञायते" इति वदन् सत्यनारायणः पाचिकां सीताम् उच्चैः आहूतवान्।

तत्र उपस्थितां सीताम् उक्तवान् सूर्यः– "भोः, अहं यजमानः सूर्यः वदामि। मम पुत्रस्य च शरीरं परस्परं परिवर्तितम् अस्ति" इति।

सीता सूर्यं सत्यनारायणम् एव मन्यमाना आश्चर्येण– "अये उद्धतबाल! कः अयम् असम्बद्धप्रलापः भवतः?" इति पृष्टवती।

"आतपे अटनात् पित्तविकारः जातः इति भाति। एतं पाकशालां नयतु। सः यावत् इच्छति तावत् खाद्यानि, मधुरभक्ष्याणि च ददातु" इति सदर्पं सूचितवान् सत्यनारायणः।

"किम् उक्तं भवता? बालः किमपि प्रलपति चेत् दण्डनीयः खलु सः? भवान् तु वैपरीत्येन व्यवहरन् तस्मै भक्ष्याणि दातुं सूचयति। भवतः एतत् लालनम् एव तं दूषयति, पश्यतु" इति वदन्ती सीता तम् आकृष्य ततः नीतवती।

पाकशालायां सूर्यः आत्मनः नैजं परिचयं दातुं बहुधा प्रयत्नं कृतवान्। किन्तु तस्य सर्वे





प्रयत्नाः विफलाः।

सः गृहस्य कर्मकरं परमेशम् आहूय उक्तवान्– "भोः, अहं भवतः यजमानः सूर्यः अस्मि" इति।

"प्रभो! एतद्विषये सन्देहः एव नास्ति मम" इति वदन् हसन् साभिनयं नमस्कृतवान् परमेशः।

"भोः, मम वचनं सत्यं भोः। अन्यथा मा भावयत्" इति साग्रहम् उक्तवान् सूर्यः।

"भवदुक्तं सत्यम् एव" इति हसन् स्वकार्यार्थं ततः निर्गतवान् परमेशः।

इदानीं किं करणीयम् इति न जानाति सूर्यः। तदीये वचने कोऽपि न विश्वसिति। तेन यद्यत् उच्यते तत्सर्वं सत्यनारायणस्य समीपं गत्वा हसन्तः निवेदयन्ति ते।

सत्यनारायणः सूर्यम् आहूय विवेकं बोधयन् उक्तवान्– "भोः, त्वरावशात् रूपपरिवर्तनविषयं सर्वान् वदति चेत् श्रोतारः भवन्तं भ्रष्टमतिं मन्यन्ते। भवन्तं बलात् चिकित्सालयं प्रेषयिष्यन्ति। अतः मौनं स्थितिः एव वरम्। यत् भवेत् तत् भवतु नाम" इति।

पाचिका सीता सत्यनारायणस्य विषये चिन्तयति– 'हा हन्त! अल्पः बालः एषः! उदरवेदनाव्याजेन शालां न गतः इत्यतः तस्मै आहारस्यैव अदानं सर्वथा अनुचितम्। अहम् एव तम् आहूय प्रीत्या किमपि दातुम् अपि न शक्नोमि। यतः यजमानः अद्य लज्जालुः वधूः इव गृहे एव तिष्ठति। बहिर्गमनसूचना अपि न दृश्यते' इति।

तावता सा स्मृतवती यत् गृहे तण्डुलादीनि कानिचन प्रमुखवस्तूनि न सन्ति इति। अतः सा अट्टम् आरुह्य गत्वा यजमानम् उक्तवती– "तण्डुलाः न सन्ति इति प्रातः एव उक्तम् आसीत् मया। तण्डुलाः इदानीम् एव आनेतव्याः। तेनैव सह अन्यानि अपि कानिचन वस्तूनि आनयतु तावत्" इति।

एतत् श्रुत्वा सूर्यशरीरधारी सत्यनारायणः उच्चैः हसितवान्। एतत् दृष्ट्वा सीता आश्चर्येण तस्य मुखं पश्यति। यतः यजमानः स्वभावेन गम्भीरः। अद्य तु विना कारणं बालः इव उच्चैः हसन् अस्ति!

आसन्दे उपविष्टः सत्यनारायणः उत्थाय

कोषे स्थितायाः कुञ्चिकायाः साहाय्येन कपाटिकाम् उद्घाट्य तत्रस्थं धनं बहुकालं गणितवान्। अनन्तरं किञ्चित् धनं कोषे संस्थाप्य ततः निर्गतवान्।

यजमानस्य निर्गमनस्य अनन्तरं पाचिका सीता आहूतवती– "सत्य! सत्यनारायण!" इति। पितुः अनुपस्थितौ सत्यनारायणः यत्र तिष्ठति तत्र महान् कोलाहलः प्रतिदिनं सहजः। अद्य तु तादृशः कोलाहलः एव न श्रूयते! सर्वत्र नीरवता!

"सत्य! सत्यनारायण! कुत्र गतः भवान्" इति वदन्ती पाचिका सत्यनारायणनिमित्तं सर्वत्र अन्वेषणं कृतवती। अन्ते तया पितुः प्रकोष्ठे महति आसन्दे चिन्तामुद्रया उपविष्टः सत्यनारायणः दृष्टः।

"अत्र अस्ति वा भवान्? माम् आटयति खलु भवान्? यावत् आह्वयामि चेदपि प्रत्युत्तरम् एव नास्ति भवतः" इति प्रीतिपूर्णेन स्वरेण आक्षिप्तवती सीता।

सूर्यः दिग्भ्रान्तः सन् तां दृष्ट्वा– "मां किमर्थं वृथा पीडयति? स्वकार्यं पश्यतु भवती" इति असमाधानेन उक्तवान्।

"किं भोः एतत्? अधिकारवाण्या माम् एव आदिशति खलु? सत्य! अहं वदामि, शृणोतु-एतादृशः व्यवहारः न उचितः। अद्य भवान् अन्यथा व्यवहरन् अस्ति। एतत् भवतः हिताय न भवेत्" इति उक्त्वा ततः गता सीता खाद्यानि मधुरभक्ष्याणि च स्थालिकायां स्थापयित्वा आनीय उत्पीठिकायाः उपरि स्थापितवती। जलम्



अपि आनीय स्थापितवती। खाद्यवस्तूनि आनीय स्थापितवतीं सीतां क्षणकालं तदेकदृष्ट्या दृष्टवान् सूर्यः। अनन्तरं सः महतीं बुभुक्षां स्मरन् तानि सर्वाणि वेगेन खादितवान्।

सूर्यस्य निश्शक्तिः अपगता। एतावत् खादितं चेदपि उदरवेदनायाः सूचना काऽपि नास्ति। शरीरे कश्चन उत्साहः दृश्यते। रूपपरिवर्तनात् खिन्नं तदीयं मनः इदानीं किञ्चित् उल्लासयुक्तम् अस्ति। रूपपरिवर्तनात् केचन लाभाः अपि सन्ति इति सः भावयति इदानीम्। 'चिरकालम् पीडयन्ती स्थिता उदरवेदना इदानीम् अदृश्यतां गता अस्ति। इतः परं यथेष्टं खादितुं शक्यते प्रायः। अटनं, धावनं, कर्दनम्, उत्प्लवनम् इत्यादीनि न क्लेशाय। रूपपरिवर्तनेन अपि कश्चन आनन्दः जायते' इति आलोचयति सः।

सत्यनारायणस्य तु रूपपरिवर्तनात् सन्तोषः एव। कोषे धनं स्थापयित्वा गृहात् निर्गतः सः साक्षात् आपणं गतवान्। वणिक् शिवश्रेष्ठी यत् मूल्यं सूचितवान् तेनैव मूल्येन अपेक्षितानि सर्वाणि वस्तूनि क्रीतवान्। दर्पेण एव श्रेष्ठिने धनं दत्तवान्। अनन्तरं कञ्चन कर्मकरम् आहूय 'एतानि वस्तूनि स्वीकृत्य माम् अनुसरतु' इति उक्त्वा गृहं प्रति प्रस्थितवान्। मार्गे गोलिकाः पाञ्चालिकाः च दृष्टाः। ताः अपि क्रीतवान् सः।

मार्गे मिलिताः बहवः ज्येष्ठाः "नमस्कारः श्रीमन्!" इति वदन्तः तं नमस्कृत्य अग्रे गतवन्तः। माम् अपि ज्येष्ठाः नमस्कुर्वन्तः सन्ति इति सन्तोषः सत्यनारायणस्य। 'एतान् सर्वान् सुलभतया वञ्चितवान् अहम्' इति मनसि एव हसति सः। एवं नमस्कृतवत्सु बहवः परिचिताः एव। केचन अपरिचिताः अपि तेन मिलिताः आसन्। 'एवं मिलिताः अज्ञाते विषये किमपि पृच्छन्ति चेत् किम् उत्तरं दातव्यम्?' इति तस्य आतङ्कः। किन्तु दैववशात् तादृशी परिस्थितिः न आगता। — (अनुवर्तते)





# चतुरः वैद्यः

महाकोसलस्य राज्ञी कदाचित् तीव्रम् अस्वस्था जाता। तस्याः अस्वास्थ्यस्य निवारणार्थं वैद्याः बहुधा प्रयत्नं कृतवन्तः। तथापि राज्ञ्याः अस्वास्थ्यं न अपगतम्। बान्धवाः आप्ताः च राज्ञ्याः पार्श्वे उपविश्य सदा समाधानवचनानि वदन्ति।

कदाचित् महाराजेन श्रुतं यत् कश्चन श्रेष्ठः संन्यासी हिमालयात् आगत्य राजधान्यां स्थितः अस्ति इति। राजा संन्यासिनं प्रासादम् आनाय्य सगौरवं सत्कृतवान्। अनन्तरं पत्न्याः अस्वास्थ्यस्य वार्तां निवेद्य 'अस्वास्थ्यनिवारणार्थं कोऽपि मार्गः ज्ञातः चेत् कृपया अहं सूचनीयः' इति प्रार्थितवान्।

संन्यासी राज्ञ्याः परीक्षां कृतवान्। राजवैद्यैः सह समालोचनम् अपि कृतवान्। वैद्यैः दत्तम् औषधं सम्यक् परिशीलितवान्।

सः महाराजं दृष्ट्वा उक्तवान्– "राजन्! राज्ञ्याः रोगः किमर्थं न अपगतः इति मया ज्ञातम् अस्ति। एतस्याः रोगः अतीव विचित्रः। पापात्मनां सम्पर्कः यावत् भवेत् तावत् एतस्याः रोगः न अपगच्छति। अतः पापात्मानः तस्याः समीपं यथा न गच्छेयुः तथा व्यवस्था करणीया। तथा कृतं चेत् मम औषधोपचारः परिणामकारी भवेत्" इति।

यदा संन्यासी महाराजम् उद्दिश्य वदन् आसीत् तदा मित्रबान्धवाः सर्वे तत्रैव आसन्। तैः सहजतया संन्यासिनः वचनानि श्रुतानि एव। 'राज्ञीसमीपम् अस्माकं गमनेन राज्ञ्याः रोगः' यदि वर्धेत तर्हि वयं 'पापात्मानः' इति अपख्यातिं प्राप्नुयाम' इति चिन्तयन्तः ते राज्ञीसमीपं गमनं परित्यक्तवन्तः।

दिने दिने उल्लाघतां प्राप्नुवती महाराज्ञी अष्टमे दिने स्वेच्छया सञ्चारं कर्तुम् अपि शक्ता अभवत्।

राजा संन्यासिनं कृतज्ञतावचनानि

उक्त्वा– ''श्रीमन्! मम आस्थाने बहवः महावैद्याः सन्ति। महाराज्ञी विचित्रव्याधिना ग्रस्ता अस्ति इति, पापात्मनां सम्पर्कः न भवेत् इति च तैः किमर्थं वा न ज्ञातम्?'' इति आश्चर्येण पृष्टवान्।

तदा संन्यासी हसन् उक्तवान्– ''भवतः वैद्याः सर्वे समर्थाः एव। तैः योग्यः औषधोपचारः कृतः आसीत्। तैः यत् औषधं दत्तं तदेव दत्तं मया अपि। पापात्मनां सम्पर्कः न भवेत् इति सूचयतः मम आशयः अन्यः एव आसीत्'' इति।

संन्यासिनः वचनस्य आशयम् अजानन् राजा प्रश्नार्थकदृष्ट्या संन्यासिनं दृष्टवान्।

''राजन्! रोगस्य उपशमनार्थम् औषधोपचारः यथा आवश्यकः तथैव विश्रान्तिः अपि आवश्यकी। भवतः मित्रबान्धवाः सहानुभूतिप्रदर्शनार्थं सदा महाराज्ञयाः पार्श्वे एव तिष्ठन्तः तस्याः विश्रान्त्यर्थम् अवकाशम् एव न कल्पयन्ति स्म। सर्वदा रोगविषये वार्तालापेन राज्ञयाः मनसि भावना भवति स्म यत् मम रोगः तीव्रतरः एव इति। इतरेषाम् एतां पीडां निवारयितुम् एव अहम् उपायं कृतवान्। यदा मित्रबान्धवानाम् आगमनं स्थगितं तदा राज्ञया विश्रान्तिः प्राप्ता। तया शुद्धः वायुः सेवितः। मनः अपि तस्याः स्वस्थं जातम्। औषधं तु योग्यम् आसीत् एव। अतः सा स्वस्था जाता'' इति उक्तवान् संन्यासी।

''राजवैद्याः एतत्सर्वं न जानन्ति स्म वा?'' इति पुनः पृष्टवान् राजा।

''जानन्ति स्म एव। तथापि महाराजं भवन्तं 'बान्धवान् दूरीकरोतु' इति वक्तुं तेषां धैर्यं न आसीत्। अहं तु 'पापात्मनां सम्पर्कः न भवेत्' इति सूचयन् तान् उपायेन दूरीकृतवान्। वस्तुतः तु राज्ञयाः रोगः न असामान्यः'' इति वदन् संन्यासी स्वस्य परिचयम् अपि निवेदितवान्।

वस्तुतः सः सुदूरात् हिमालयात् आगतः संन्यासी न, अपि तु संन्यासिवेषधारी पार्श्वग्रामनिवासी कश्चन वैद्यः।






# भीरुः बलदः

प्रश्नकर्तुः वेतालस्य अपेक्षया अपि उत्तरवक्ता अहम् एव श्रेष्ठः इति भावयन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। कथां वक्तुं सिद्धः वेतालः तत्र शाखायां लम्बमानः आसीत्। वृक्षम् आरुह्य तं वेतालं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् त्रिविक्रमः। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवान् अपि इदानीं वस्तुतः अपि निशाचरः एव संवृत्तः। एषः परिश्रमः केन उद्देशेन? कीदृशं महत् फलं प्राप्तुम् इच्छति भवान्? एवं कर्तुं भवन्तं कः आदिष्टवान्? विवेकेन व्यवहरन् अस्ति वा भवान्? भवतः व्यवहारः विवेकपूर्णः यदि न स्यात् तर्हि भवतः प्रेरकः भवन्तं कदाचित् अप्रयोजकं भावयेत्। बलदस्य जीवने एवम् एव प्रवृत्तम्। भवतः मार्गायासस्य निवारणार्थं बलदस्य कथां श्रावयामि। शृणोतु तावत्" इति।

## वेतालकथा



अनन्तरं बेतालेन कथा आरब्धा –

नागपुरनामके राजधानीनगरे धर्मेन्द्रो नाम कश्चित् निवसति स्म। सः स्वप्रयत्नेन एव प्रवृद्धिं गतः। वार्धक्ये सः स्वस्य चतुरः पुत्रान् आहूय उक्तवान्– ''भवन्तः चत्वारः अपि विभिन्नासु विद्यासु प्रवीणाः, बिविधासु वृत्तिषु नियुक्ताः चापि। मार्गदर्शनं प्राप्तुं विविधाः जनाः भवतां समीपम् आगच्छन्ति। तान् उद्दिश्य भवन्तः यत् बदन्ति तत् सर्वदा युक्तम् एव भवति इति न इति मम अभिप्रायः। प्रष्टुः योग्यतां निर्णीय फलाफलं सम्यक् विविच्य उपदेशः करणीयः। तेन एव प्रष्टुः भवतां च हितं सिध्यति'' इति।

''भवतः वचनं सदा स्मरन्तः अक्षरशः पालयिष्यामः'' इति उक्तवन्तः ते पुत्राः।

धर्मेन्द्रस्य ज्येष्ठः पुत्रः राजेन्द्रः। सः न्यायशास्त्रे विशेषपरिणतिं प्राप्तवान् आसीत्। योग्यतानुगुणं राजास्थाने न्यायाधीशस्य साहाय्यकपदं प्राप्तवान् आसीत् अपि। सः पित्रार्जिते गृहे एव निवसन् प्रतिदिनम् उद्योगार्थं गत्वा आगच्छति स्म। अन्ये त्रयः नगरस्य विभिन्नेषु स्थलेषु निवसन्तः निष्ठया कार्यं कुर्वन्तः स्वक्षेत्रे प्रसिद्धिं गताः आसन्।

एकदा बलदः नाम कश्चन राजेन्द्रसमीपम् आगत्य स्वकीयं कष्टं निवेदितवान्– ''श्रीमन्! मदीयं पित्रार्जितम् एकं गृहम् अस्ति। तदेव मम सर्वस्वम्। पत्न्या पुत्र्या च सह तस्मिन् गृहे निवसन् परिश्रमेण तत्र तत्र कार्यं कुर्वन् कथञ्चित् जीवननिर्वहणं कुर्वन् अस्मि अहम्। मदीयम् एतत् गृहं क्रेतुम् इच्छति धनिकः धनगुप्तः। 'मम गृहस्य विक्रयणम् अहं कर्तुं न इच्छामि' इति तम् उक्तवान् अहम्। किन्तु सः एतत् न अङ्गीकरोति। 'चतुर्णां दिनानाम् अवधिः दीयते। तदभ्यन्तरे भवता गृहं मह्यं विक्रेतव्यम्। अन्यथा मदीयाः मल्लाः आगत्य भवन्तं, भवतः पुत्रीं पत्नीं च गृहात् निष्कास्य वस्तूनि मार्गे क्षिपन्ति' इति माम् उक्त्वा गतवान् सः। इदानीं मया किं करणीयम् इति न ज्ञायते'' इति।

''एवं तर्हि भवान् न्यायाधीशस्य समीपं

गत्वा प्रवृत्तं निवेद्य साहाय्यं प्रार्थयतु'' इति सूचितवान् राजेन्द्रः।

''मया अपि तथैव करणीयम् इति चिन्तितम् आसीत्। किन्तु धनगुप्तस्य न्यायाधीशस्य च आत्मीयता अस्ति इति श्रूयते। न्यायाधीशः धनगुप्तस्य एव पक्षपाती भवेत्। अतः एव मार्गदर्शनं प्राप्तुं भवतः समीपम् आगतवान्'' इति उक्तवान् बलदः।

राजेन्द्रः क्षणकालम् आलोच्य उक्तवान्– ''न्यायाधीशः पक्षपातम् आचरति इति भवतः भावना अस्ति चेत् अन्यः मार्गः अस्ति। मङ्गलवासरे प्रातःकाले राजा सार्वजनिकानां कष्टनिवेदनं शृणोति। श्वः मङ्गलवासरः खलु? अतः भवान् श्वः महाराजं दृष्ट्वा स्वकीयं कष्टं निवेदयतु। महाराजः तु निष्पक्षपातं व्यवहरति खलु?'' इति।

''धनगुप्तविषये वैरं किमपि नास्ति मम। मम महाराजसमीपं गमनं ज्ञात्वा सः मद्विषये कुपितः भवेत्। तथा चेत् आजीवनं मम क्लेशः एव। अतः महाराजसमीपं गमनम् एतावच्छीघ्रं मास्तु इति भाति मम। किं चिन्तयति भवान्?'' इति पृष्टवान् बलदः।

''तर्हि प्रथमं न्यायाधीशदर्शनम् एव वरम्। तत्र गत्वा न्यायालये व्यवहारं लेखयतु। न्यायाधीशः पक्षपातम् आचरति चेत् महाराजं द्रक्ष्यामि इति बन्धुमित्राणि वदतु। तेषां द्वारा एतं विषयं धनगुप्तः अपि



श्रोष्यति एव। एतदनन्तरम् अपि सः बलात्करोति चेत् महाराजदर्शनं तु अस्ति एव'' इति सूचितवान् राजेन्द्रः।

बलदः कृतज्ञतां समर्प्य ततः निर्गतः धर्मेन्द्रस्य द्वितीयपुत्रस्य वीरेन्द्रस्य समीपं गतवान्। स्वकीयं कष्टं निवेद्य सः उक्तवान्– ''भवतः अग्रजसमीपं यदा अहं गतवान् तदा सः न्यायप्राप्तिविषये मार्गम् उपदिष्टवान्। किन्तु धनगुप्तस्य मल्लाः आगत्य मां पीडयन्ति चेत् किं करणीयम् इति न ज्ञायते। न्यायालयव्यवहारः विलम्बाय भवति एव। तावत्पर्यन्तं किं करणीयम् इति अजानन् भवत्समीपम् आगतवान् अस्मि'' इति।

''तद्विषये चिन्तां न करोतु। मल्लानां गुरुः



विदेशीयाः वणिजः आगताः चेत् तैः सह वार्तालापार्थं राजा रत्नराजम् एव आह्वयति। वस्तूनां मौल्यनिर्णये, सुवर्णरत्नादीनां परीक्षणे च रत्नराजस्य असदृशं पाण्डित्यम्। अतः एव राजा एतस्य वाक्यं परमप्रमाणं मन्यते।

बलदः रत्नराजं स्वकीयां समस्यां निवेद्य पृष्टवान्– "भवतः अग्रजौ द्वावपि योग्यं मार्गदर्शनं कृतवन्तौ। बलवतां विरोधः अस्ति चेत् वयं न्यायमार्गेण गच्छन्तः अपि व्यवहारे न्याय्यं फलं प्राप्तुं न शक्नुमः। बलवतां बलात्कारकारणतः मया असहायकतया गृहं विक्रेतव्यं भवेत्। गृहं विक्रेतव्यम् एव चेत् विक्रयणेन हानिः यथा न भवेत् तथा वा प्रयत्नः करणीयः। धनगुप्तः तु गृहार्थं पञ्चसहस्रं रूप्यकाणि दास्यामि इति उक्तवान् अस्ति। किन्तु मम गृहस्य मूल्यं ततोऽपि अधिकं भवेत् इति मम अभिप्रायः। वस्तुतः केन मूल्येन विक्रेतुं शक्यते तत्?" इति।

"भवतः गृहं राजधान्यां मध्यभागे अस्ति। अतः पञ्चाशत् सहस्रं रूप्यकाणि यः कोऽपि दद्यात् एव। वराहश्रेष्ठी तु षष्टिसहस्रं रूप्यकाणि दद्यात्। यतः सः जामातृनिमित्तं तस्मिन् प्रदेशे गृहम् अन्विष्यन् अस्ति। अतः एतद्विषये तं पश्यतु भवान्। धनगुप्तस्य योग्यः प्रतिस्पर्धी सः" इति सूचितवान् रत्नराजः।

भीमबलः अस्ति खलु? तस्य शिष्यः सिंहबलः अतीव सज्जनः। सः तरुणः चेदपि सर्वान् मल्लान् पराजेतुं शक्नोति। सः सर्वदा अपि धर्मन्याययोः पक्षम् आश्रित्य व्यवहरति। सः सज्जनानां केवलम् उपकारं करोति इति महाराजः अपि जानाति। अतः तस्य साहाय्यं प्रार्थयतु" इति सूचितवान् बीरेन्द्रः।

"भवान् सेनापतेः कार्यदर्शी इत्यतः एतादृशेषु विषयेषु योग्यं मार्गम् उपदेष्टुम् अर्हति इति विचिन्त्य मया भवत्समीपे यत् आगतं तत् सफलं जातम्। नितराम् उपकृतः अस्मि" इति उक्त्वा बलदः बीरेन्द्रं नमस्कृत्य ततः धर्मेन्द्रस्य तृतीयपुत्रस्य रत्नराजस्य समीपं गतवान्।

रत्नराजः समर्थेषु वणिक्षु अन्यतमः।

रत्नराजं कृतज्ञतावचनानि उक्त्वा बलदः ब्रह्मेन्द्रस्य समीपं गतवान्। ब्रह्मेन्द्रः धर्मेन्द्रस्य चतुर्थः पुत्रः। वेदे, शास्त्रेषु, स्मृतिषु तस्य विशेषपरिश्रमः। आध्यात्मिकक्षेत्रे कोऽपि सन्देहः आगतः चेत् राजा ब्रह्मेन्द्रम् आहूय परिहारं जानाति। राज्यस्य देवालयसम्बन्धी व्यवहारः सर्वोऽपि ब्रह्मेन्द्रेण एव दृश्यते।

बलदः स्वकीयां समस्यां ब्रह्मेन्द्रं निवेद्य उक्तवान्– ''मदीयं यत् गृहम् अस्ति तत् परम्परया प्राप्तम्। मम पिता स्वस्य मरणात् पूर्वं ता भूमिं मम पुत्र्याः नाम्नि लिखितवान्। मम तु सा अद्वितीया पुत्री। योग्याय वराय सा दातव्या इति मम विचारः। एषः धनगुप्तः वदति यत् गृहं मह्यं विक्रेतव्यम्, अन्यथा भवतः पुत्री मम पुत्राय दातव्या इति। धनगुप्तस्य पुत्रः तु सर्वथा असुन्दरः। तादृशाय पुत्रीं दातुं न इच्छामि अहम्। इदानीं किं करणीयम् इति न ज्ञायते। योग्यं मार्गम् उपदिश्य माम् उपकरोतु कृपया'' इति।

ब्रह्मेन्द्रः क्षणकालम् आलोच्य उक्तवान्– ''राजधान्यां ये विवाहाः प्रचलन्ति तेषां निमित्तम् आस्थानपुरोहितस्य सोमयाजिनः अनुमतिः आवश्यकी। भवान् तं दृष्ट्वा स्वकीयां समस्यां निवेदयतु। सः सज्जनपक्षपाती। निर्धनान् बहुधा उपकरोति। अतः सः धनिकेन बलात्कारेण क्रियमाणं विवाहं निश्चयेन स्थगयेत्। अनन्तरं योग्यं वरम् अन्विष्य भवान् पुत्र्याः विवाहं निर्वर्तयतु'' इति।



बलदः कृतज्ञतावचनानि उक्त्वाः ततः निर्गतवान्। अनन्तरम् अल्पे एव काले धनगुप्तस्य पुत्रस्य बलदस्य पुत्र्याः च विवाहः सम्पन्नः। बलदस्तु नगरात् बहिः अल्पं क्षेत्रं क्रीत्वा तत्र कुटीरं निर्माय पत्न्या सह वासं कृतवान्।

धर्मेन्द्रस्य चत्वारः पुत्राः अपि एतां वार्तां श्रुतवन्तः। परस्परसमालोचनं कृत्वा ते निश्चितवन्तः यत् अस्माभिः पात्रापात्र-विवेचनम् अकृत्वा मार्गदर्शनं कृतम् इति।

वेतालः एवं कथां समाप्य अवदत्— "महाराज! धर्मेन्द्रस्य पुत्राः बलदम् अपात्रं भावयन्तः आत्मतृप्तिं प्राप्तवन्तः खलु? वस्तुतः बलदः निर्धनः। सः धनगुप्तं समर्थतया सम्मुखीकर्तुम् अशक्तः पराजयम् अङ्गीकृतवान्। बलदानुगुणं मार्गदर्शनं कर्तुम् अशक्ताः अभवन् धर्मेन्द्रपुत्राः। तथापि दोषं बलदे आरोपयन्तः आत्मानं समर्थितवन्तः ते। एवं खलु? किम् एतत् उचितम्? एतस्य सन्देहस्य समाधानं जानन् अपि यति भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्— "धर्मेन्द्रपुत्राः अपात्रं मार्गम् उपदिष्टवन्तः इत्यत्र सन्देहः एव नास्ति। वस्तुतः बलदः सर्वथा अपात्रम्। सः चञ्चलमतिः भीरुः च। सः यदि राजेन्द्रेण, अन्यैः त्रिभिः वा यथा सूचितं तथा कृतवान् स्यात् तर्हि धनगुप्तस्य पीडा अपहृता अभविष्यत्। भीरुः सः चतुर्णाम् अपि मार्गदर्शनं श्रुत्वा अपि एकस्य अपि सूचनां न पालितवान्। बलदस्य दौर्बल्यं जानन् धनगुप्तः तदीयां भूमिम् अल्पेन मूल्येन क्रीत्वा तदीयां पुत्रीं स्वपुत्राय दापितवान् चापि। भीरुत्वकारणतः एव बलदेन उभयथा अपि हानिः अनुभूता" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# चन्दमामानुबन्धः— १०

# ज्ञानभाण्डागारम्

एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्—



## जहाङ्गीर्

जहाङ्गीर्नाम्ना ख्यातः, अकबरचक्रवर्तिनः ज्येष्ठः पुत्रः सलीम् मिर्झा १५६९ तमे वर्षे अगस्ट् ३० दिनाङ्के जातः। तस्य माता रजपूतवंशजा। १६०१ तमे वर्षे सः पितुः प्रतिभटनं कृतवान्। किन्तु सः पित्रा निगृहीतः, क्षान्तः च। एतस्य सिंहासनारोहणस्य अनन्तरम् एतदीयः पुत्रः खुस्रु पितरं विरुध्य व्यवहृतवान्। तदा कारागारे स्थापितः सः पुत्रः १६२२ तमे वर्षे तत्रैव मरणं प्राप्तवान्। जहाङ्गीर्शासनकाले एव केप्टन् हाव्किन्स्, सर् थामस् रोयी च आंग्लराज्ञानां प्रतिनिधित्वेन मोघलास्थानम् आगतवन्तौ। ततश्च ब्रिटन्देशस्य वाणिज्यं भारते आरब्धम्। जहाङ्गीर् कलाप्रियः परमतसहिष्णुः च आसीत्। शाहजहान् कदाचित् एतस्य प्रतिभटनं कृतवान्। अनन्तरकाले सेनापतिः मोहब्बत् खान् अपि राज्ञः विरुद्धं व्यवहृत्य राजानं किञ्चित्कालं कारागारे स्थापितवान्। किन्तु जहाङ्गीरस्य चतुरा पत्नी नूर् जहान् तं बन्धविमुक्तं कृतवती। जहाङ्गीर् १६२६ तमें वर्षे दिवङ्गतः।

## सः कः स्यात्?

कश्चन तरुणः ब्राह्मणः, राजकुमारः च एकस्मात् एव गुरोः सकाशात् विविधानां शास्त्राणाम् अध्ययनं कुरुतः। तौ आत्मीयौ जातौ। कदाचित् राजकुमारः ब्राह्मणकुमारम् उक्तवान्— "यदा अहं राजा भविष्यामि तदा भवतः जीवने काऽपि न्यूनता न भविष्यति। राज्यस्य अर्धं भागम् अपि भवते दातुं सिद्धः अहम्" इति। तयोः विद्याभ्यासः समाप्तः। तौ वियुक्तौ जातौ। एतदनन्तरं कानिचन वर्षाणि अतीतानि। ब्राह्मणः निर्धनः सन् कुटुम्बनिर्वहणे अपि महत् कष्टम् अनुभवति। तत्समये सः इदानीं राजपदम् अलङ्कृतवता स्वविद्याभ्याससमये दत्तम् आश्वासनं स्मृतवान्। सः राजसमीपं गत्वा तं सम्बोधितवान्— "मित्र!" इति। राजा तु "निर्धनः कश्चित् राज्ञः मित्रं भवितुं नार्हति" इति वदन् तं तिरस्कृतवान्।

एतया घटनया ब्राह्मणः नितरां लज्जितः अभवत्। अनन्तरकाले सः राज्ञः गर्वस्य भङ्गं कृतवान्। एतेन क्रुद्धः राजा कालान्तरे प्रतीकारं साधितवान्।

(अ) सः ब्राह्मणः कः?
(आ) सः राजा च कः?

# भारतम् – पूर्वम् इदानीं च

यस्य उत्तरदिशि हिमालयपर्वतश्रेणी, दक्षिणदिशि कन्याकुमारी, अन्यपार्श्वद्वये सागरः, तत् एतत् भारतं कश्चन विशालः भूखण्डः।

भारतं कियत् पुरातनम्? केचन वदन्ति– भूमिः इव अतिपुरातनम् इति। किन्तु एवं कथनं युक्तं न स्यात्। भारतम् इत्यस्य अर्थः अत्र तत्समवेता संस्कृतिः सभ्यता वा इति। भारतीयसंस्कृतेः प्राचीनत्वं न अस्माभिः सम्यक् ज्ञातम् इत्येव वक्तव्यं भवति। केचन वदन्ति– क्रि.पू. ५००० वर्षेभ्यः सा प्रचलन्ती अस्ति इति। अन्ये केचन ततोऽपि प्राचीना इति वदन्ति।

किन्तु एतावत् तु वक्तुं शक्यते यत् एतस्य काचित् सुदीर्घा परम्परा अस्ति इति। एतादृशी तत्त्वचिन्तनोपेता, परमप्राचीना, वैभवसमेता परम्परा न अन्यस्याः कस्याश्चित् अपि संस्कृतेः अस्ति। जगति सर्वप्राथम्येन ख्याताः ग्रन्थाः– वेदाः, सर्वप्राथम्येन ख्यातं महाकाव्यद्वयं– रामायणं महाभारतं च, जगति प्रथमः कथासङ्ग्रहः– कथासरित्सागरः, जगति प्रथमः आख्यायिकासङ्ग्रहः– पञ्चतन्त्रम्, प्राथम्येन ख्याताः नीतिकथाः– जातककथाः, इत्येतानि सर्वाणि भारते एव रचितानि। अपूर्वाः तात्त्विकविचाराः, दर्शनानि च अत्रैव प्रवृद्धानि।

भारतस्य मूलं नाम 'भारतवर्षम्' इति।



# तवर्षम्



योऽयं भरतः लघूनि अनेकानि राज्यानि एकचक्राधिपत्ये आनीतवान्, तस्य भरतस्य इदं भारतम्। बहोः कालात् अनन्तरं पर्शियन् जनाः, 'सिन्धुनदस्य अनन्तरं स्थितः देशः' इत्यभिप्रायेण हिन्दु इति आहूतवन्तः। हिन्दुशब्दतः 'इण्डिया' (India) शब्दः उत्पन्नः। भारतेन सह ये व्यवहृतवन्तः प्राचीनाः पर्शियन् जनाः ग्रीक्जनाः च, तेषां दृष्ट्या हिन्दुपदस्य अर्थः भारतीयः इति आसीत्, न तु कस्यापि धर्मस्य सम्बन्धी इति।

प्राचीने भारते बहूनि राज्यानि आसन् चेदपि एतत् अखण्डं राष्ट्रम् आसीत्, यतः तेषु सर्वेषु राज्येषु एका एव सांस्कृतिक-साहित्यिक-परम्परा प्रवहति स्म।

दुर्दैववशात् १९४७ तमे वर्षे भारतस्य कश्चन भागः 'पाकिस्तान्' नाम्ना पृथक् अभवत्। एषः 'नूतनः' देशः अपि पुनः विभक्तः। ततः 'बांग्ला देशः' नाम तृतीयः देशः उत्पन्नः।

इदानीन्तनम् अफगानिस्तान् अपि बहुपूर्वं भारतस्य अङ्गम् एव आसीत् इति भाति। श्रीलङ्का, मलया, काम्बोडिया, इण्डोनेषिया, चैना इत्यादयः देशाः सर्वे भारतीयसंस्कृत्या प्रभाविताः आसन्। भारतस्य सांस्कृतिकः भूपटः भौगोलिकस्य भूपटस्य अपेक्षया अपि सुविशालः आसीत्।




१. पाश्चात्यप्रपञ्चाय चीनादेशम् अधिकृत्य विस्तृतम् इतिवृत्तं केन दत्तम्?

२. सः ग्रन्थकर्ता कः, यस्य च सुप्रसिद्धं पुस्तकं गणितशास्त्रे अस्ति चेदपि नोबेल्पारितोषिकं साहित्यकृतिनिमित्तं प्राप्तवान्?

३. कः श्रेष्ठः रूपकलेखकः स्वशिरसि कूर्मस्य पतनात् दिवङ्गतः?

४. प्रसिद्धायाः कादम्बर्याः (Novel) कथावस्तु स्वप्नद्वारा प्राप्तम्। सः ग्रन्थकर्ता कः? तदीयग्रन्थस्य नाम च किम्?

५. वाल्मीकि-व्यास-समकक्षः पाश्चात्यदेशीयः श्रेष्ठः कविः कः?

६. तस्य ग्रन्थयोः नाम किम्?

७. तेन अमरत्वं प्रापितस्य नगरस्य नाम किम्?

८. तस्य प्रथमपुस्तकस्य नायकः कः?

९. तस्य द्वितीयपुस्तकस्य नायकः कः?

१०. सः कविः कदा कुत्र जीवति स्म?

## उत्तराणि

### सः कः स्यात्?

(अ) द्रोणः। (आ) राजा द्रुपदः।

### साहित्यम्

१. मार्को पोलो।

२. बर्ट्रण्ड् रस्सेल्। तदीयं प्रसिद्धं पुस्तकं प्रिन्सिपिया मेथेमेटिका।

३. ग्रीक्नाटककलेखकः एस्किलस्। डयमानस्य गृध्रस्य मुखात् तदुपरि कूर्मः पतितः।

४. राबर्ट् लूयिस् स्टीवन्सन्। 'डा।। जाकेल् एण्ड् मिस्टर् हैडे' इति।

५. होमर्।

६. इलियड्, ओडिसि इति।

७. ट्रोय्।

८. हेलेन्।

९. युलिस्सीस्।

१०. प्रायः क्रि.पू. नवमे शतके, ग्रीस्देशे।



# नेहरूकथा – ६

१९२० तमे वत्सरे कलकत्तानगरे कांग्रेस्महाधिवेशनं प्रवृत्तम्। अमेरिकादेशे बहूनि वर्षाणि स्थितः, तेषु एव दिनेषु मातृभूमिं प्रत्यागतः लालालजपतरायः तस्य अधिवेशनस्य आध्यक्षं निरूढवान्।

आंग्लसर्वकारस्य साहाय्यकरणं सर्वथा निराकरणीयम् इति कांग्रेस्संस्थया प्रकटनं दातव्यम् इति गान्धीमहोदयस्य आशयः। किन्तु बहवो नायकाः एतस्मिन् विषये सहमतिं न प्रदर्शितवन्तः। मोतीलालनेहरू तु गान्धीजी-अभिप्रायं सहर्षम् अङ्गीकृतवान्।





कांग्रेस्संस्थायाः स्वरूपं दिने दिने परिवर्तमानम् आसीत्। इदानीं सा केवलम् उच्चस्तरीयाणां संस्था न। मध्यमस्तरीयाः निम्नस्तरीयाः चापि खादीवस्त्रं धरन्तः कांग्रेस्संस्थायाः सदस्याः भवन्ति स्म। तादृशाः सर्वे असहकारप्रकटने सहमतिं प्रदर्शितवन्तः।



कांग्रेस्संस्थायां यत् परिवर्तनं दृश्यते तत् न शुभसूचकम् इति भावयत्सु महम्मदाली जिन्ना अपि अन्यतमः। कांग्रेस्संस्थायां एतदृशं महत् परिवर्तनं सः सर्वथा न इच्छति।

कांग्रेस्महाधिवेशनस्य अनन्तरं जवहरलाल् गान्धीजीमहोदयं शान्तिनिकेतनं नीतवान्। तत्र गान्धीजी-रवीन्द्रनाथठाकूरयोः चिरस्मरणीयः समावेशः प्रवृत्तः। गान्धीजी रवीन्द्रनाथवर्यं 'बोरोदादा' (अग्रजः) इति सम्बोधितवान्।





असहकारान्दोलनं देशे सर्वत्र प्रसृतम्। मासद्वयाभ्यन्तरे – तन्नाम १९२१ तमवर्षस्य डिसेम्बरमासे, १९२२ तमवर्षस्य जनवरीमासे च – ३०,००० जनाः प्रायः कारागारं प्रवेशिताः। जवहरलाल् अपि कारागारे स्थापितः। कारागारवासस्य प्रथमः अनुभवः अयं तस्य।

आंग्लसाम्राज्यस्य भावी चक्रवर्ती युवराजः वेल्स् तत्समये पर्यटनार्थं भारतम् आगतवान्। 'तस्य सर्वे कार्यक्रमाः बहिष्करणीयाः' इति उद्घोषितं कांग्रेस्संस्थया। मुम्बई-कलकत्ताप्रभृतिषु महानगरेषु युवराजसम्बन्धिनी शोभायात्रा यदा गता तदा राजमार्गाः निर्मानुषाः दृश्यन्ते स्म।





तत्समये एव आरक्षकाणां पीडया क्रुद्धाः चौरीचौराग्रामीणाः केचन आरक्षकालयं अग्निसात्कृतवन्तः। एतस्मिन् सन्दर्भे भवनस्थाः केचन आरक्षकाः सजीवं दग्धाः अभवन्। हिंसाकृत्यं सर्वथा असहमानः गान्धी राष्ट्रव्यापि आन्दोलनं हठात् स्थगनीयम् इति आदिष्टवान्।

कुत्रापि प्रवृत्तस्य हिंसाकृत्यस्य निमित्तं राष्ट्रव्यापिनः आन्दोलनस्य स्थगनं जवहराय सर्वथा न अरोचत। अन्ये केचन प्रमुखाः अपि गान्धीजिविचारे असम्मतिं प्रदर्शितवन्तः। तथापि गान्धीजी विचारे परिवर्तनं न आनीतवान्। ततः अल्पे एव काले गान्धीजी कारागारे स्थापितः।





जवहरलाल् द्विवारं कारागारं प्रवेशितः अभवत्। भारते शासननियमानां कार्यान्वयनं यत् प्रवर्तते तत्र १९२३ तमे वर्षे जवाहरस्य दृष्टिः पतिता। पञ्जाबप्रदेशे महाराजः नाभा आंग्लैः सिंहासनच्युतः कृतः। कश्चन ऐ.ए.एस्. अधिकारी शासनसूत्राणि गृहीतवान्। जैटोप्रदेशे सिक्खमतानुगुणं प्रचलतः पारम्परिकोत्सवस्य सञ्चालनं तेन निषिद्धम्।

एताम् आज्ञां बहवः प्रतिभटितवन्तः। केचन तु उत्सवः कथञ्चित् निर्वर्तनीयः एव इति उद्देशेन जैटो गतवन्तः। मध्येमार्गं तान् अवरुध्य ताडितवन्तः आरक्षकाः। जवहरलालमहोदयः के. सन्तानं, किद्वानी इत्येताभ्यां मित्राभ्यां सह तत्रत्यां परिस्थितिं परिशीलयितुं गतवान्।





तत्र आरक्षकाः जवहरलालं के. सन्तानंवर्यं च निगडेन बद्ध्वा नगरस्य मार्गेषु शोभायात्रया नीतवन्तः। अन्धकारमये कारागारे ताभ्यां रात्रिः महता कष्टेन यापिता। अन्धकारे कश्चन मूषकः आगत्य जवहरस्य मुखं व्रणितम् अकरोत्।

–(अनुवर्तते)



# राजकुमारीपरिणयः

हाटकपुरे पूर्वं गोपालः नाम कश्चन कृषिकः निवसति स्म। तस्य त्रयः पुत्राः। रामः, भीमः, सोमः इति तेषां नाम। कृषिकार्येण जीवननिर्वहणं क्लेशाय इति गोपालस्य विचारः।

अतः पुत्राः प्राप्तवयस्काः यदा जाताः तदा तान् आहूय एकैकस्मै अपि शतं रजतनाणकानि दत्त्वा– "नगरं गत्वा वाणिज्येन धनं, अन्येन मार्गेण अपूर्वविद्यां वा सम्पाद्य आगच्छन्तु" इति उक्त्वा तान् प्रेषितवान् सः।

षण्णां मासानाम् अनन्तरं ते त्रयः पुत्राः स्वग्रामं प्रत्यागतवन्तः।

गोपालः ज्येष्ठं पुत्रं रामं पृष्टवान्– "भवता किं सम्पादितम्? धनम्, उत अन्यत्? धनं चेत् कियत्?" इति।

तदा रामः स्वस्य स्यूततः एकं दर्पणं निष्कास्य पित्रे प्रदर्शयन् उक्तवान्– "तात! महता कष्टेन सम्पादितः अस्ति एषः दर्पणः। एतस्य साहाय्येन जगति यद्यत् प्रचलति तत्र अपेक्षितं द्रष्टुं शक्यते। तथा सर्वे द्रष्टुं न अर्हन्ति। अहम् एकः एव तथा ज्ञातुं शक्नोमि" इति।

गोपालः द्वितीयं पुत्रं भीमम् अपि पृष्टवान्– "भवता किं सम्पादितम्? कियत् सम्पादितम्?" इति।

भीमः आत्मना आनीतम् अश्वम् एकं प्रदर्शयन् पितरम् उक्तवान्– "एषः अपूर्वः अश्वः। जले, स्थले, आकाशे च सञ्चरणे समर्थः एषः क्षणमात्रेण उद्दिष्टं स्थलं प्राप्नोति। महता परिश्रमेण एषः अश्वः सम्पादितः मया। एषः मम एकस्य एव वचनं पालयति" इति।

सम्पादनविषये पित्रा पृष्टः तृतीयः पुत्रः



सोमः स्वस्य अङ्गुल्यां स्थितं नक्षत्रम् इव प्रकाशमानम् अङ्गुलीयकं प्रदर्शयन् पितरम् उक्तवान्– "एतस्य साहाय्येन अहम् अदृश्यतां प्राप्य यत्र कुत्रापि गन्तुं शक्नोमि। तादृशी विशिष्टा शक्तिः अस्ति एतस्य अङ्गुलीयकस्य" इति।

पुत्रैः अपूर्वाणि वस्तूनि सम्पादितानि इति तु सत्यम् एव। किन्तु व्यावहारिकजीवने तेषां वस्तूनां कः उपयोगः इति न जानाति गोपालः।

"भवन्तः इतोऽपि व्यवहारतत्त्वं न ज्ञातवन्तः एव इति मम अभिप्रायः" इति पुत्रान् उक्तवान् सः।

तावता राजभटाः वार्तां काञ्चित् सडिण्डिमघोषं प्रसारयन्तः गतवन्तः। वार्तायाः सारः एषः– 'राज्ञः अद्वितीया पुत्री वसन्तसेना परमसुन्दरी। कश्चन दुष्टः मान्त्रिकः केभ्यश्चित् दिनेभ्यः पूर्वं ताम् अपहृत्य नीतवान्। तेन सा कुत्र नीता इति न ज्ञायते। यः ताम् आनयति तस्मै एव सा दीयते। तथा आनेता एव राज्यस्य उत्तराधिकारी भविष्यति' इति।

एतां वार्तां श्रुत्वा गोपालस्य पुत्राः पितरम् उक्तवन्तः– "वयं यानि अपूर्वाणि वस्तूनि सम्पाद्य आनीतवन्तः तेषां साहाय्येन राजकुमार्याः अन्वेषणं कृत्वा प्रत्यानेष्यामः" इति। गोपालः सन्तोषेण स्वस्य अङ्गीकारं सूचितवान्।

'मान्त्रिकेण राजकुमारी कुत्र गोपिता अस्ति' इति एतं विषयं स्वस्य दर्पणस्य साहाय्येन ज्ञात्वा उक्तवान् रामः– "समुद्रस्य मध्ये स्थिते कस्मिंश्चित् द्वीपे तां स्थापितवान् अस्ति सः। आयुधधारिणः घोराकाराः यमकिङ्करसदृशाः भटाः अहोरात्रं रक्षणं कुर्वन्ति" इति।

भीमः सोमेन सह स्वस्य अश्वम् आरुह्य ततः प्रस्थाय तस्मिन् द्वीपे गृहात् किञ्चिद्दूरे अवतीर्णवान्।

सोमः स्वस्य अङ्गुलीयकस्य साहाय्येन अदृश्यतां प्राप्य राजकुमार्याः प्रकोष्ठं प्रविष्टवान्।

तत्र मान्त्रिकः स्वस्य मन्त्रदण्डेन तां भाययन् आसीत्। सोमः धैर्येण विना शब्दम्

अग्रे गत्वा एकेन एव खड्गप्रहारेण मान्त्रिकं यमसदनं प्रेषितवान्।

अनन्तरं सः राजकुमार्या सह अश्वस्य समीपं गतवान्। त्रयः अपि अश्वम् आरुह्य अल्पे एव काले गोपालस्य पुरतः आगत्य स्थितवन्तः।

अपूर्वाणां वस्तूनां साहाय्येन राजकुमारीं रक्षितवतां पुत्राणां सामर्थ्यं मनसा श्लाघितवान् गोपालः। 'परमसुन्दर्याः राजकुमार्याः परिणयेन राज्यस्य उत्तराधिकारित्वं प्राप्यते। अतः त्रयः अपि सहजतया तां परिणेतुम् इच्छेयुः। किन्तु त्रिषु एकः केवलं तां परिणेतुम् अर्हति। तथा अर्हता कस्य?' इति आलोचयति गोपालः।

सः पुत्रान् समीपम् आहूय पृष्टवान्– "पुत्राः! सडिण्डिमघोषं वार्ता यत् प्रसारिता तदनुगुणम् आचरति महाराजः। किन्तु भवत्सु कः तां परिणेतुम् अर्हति?" इति।

ते त्रयः अपि परस्परं मुखं दृष्टवन्तः। कोऽपि किमपि उत्तरं न दत्तवान्।

'राजकुमार्याः परिणये त्रयः अपि नितराम् आसक्ताः' इति निश्चित्य गोपालः पुत्रान् उक्तवान्– "भवन्तः त्रयः अपि परस्परसहकारेण राजकुमारीं मान्त्रिक-बन्धनात् विमोच्य आनीतवन्तः। कस्यापि एकस्य प्रयत्नेन केवलेन एतत् न सिद्धम्। राजकुमार्याः परिणये भवतां त्रयाणाम् अपि महती आसक्तिः। राज्ञा पृष्टः भवत्सु एकैकः अपि अहम् एव राजकुमारीं परिणेतुम् अर्हः इति वदेत्। तदा परस्परद्वेषः विवादः च



उद्भवेत्। तथा चेत् ऐकमत्येन कृतम् अपि कार्यं निरर्थकं भवेत्। एषा एव भीतिः मम" इति।

पितुः हितबोधनं श्रुत्वा ते पुत्राः एकस्वरेण पितरम् उक्तवन्तः– "एतद्विषये भवान् यथा सूचयति तथा कर्तुं सिद्धाः वयम्। किं करणीयम् इति भवान् एव सूचयतु" इति।

तदा गोपालः हसन् उक्तवान्– "एतद्विषये मया मार्गः उपदेष्टव्यः नास्ति। विवाहार्थं वधूवरयोः सहमतिः खलु प्रधाना? अतः भवन्तः राजकुमारीं महाराजसमीपं नयन्तु। सा एव पितरं सूचयेत्– भवत्सु कं परिणेतुं सिद्धा सा इति" इति।

ते त्रयः पुत्राः राजकुमारीं महाराजसमीपं नीतवन्तः। प्रवृत्तं समग्रं निवेदितवन्तः च।

राजा पुत्रीं वसन्तसेनां पृष्टवान्– "वत्से! भवती एतेषु त्रिषु तरुणेषु कं परिणेतुम् इच्छति?" इति।

राजकुमारी क्षणकालम् आलोच्य उक्तवती– "तात! एतेषु ज्येष्ठः रामः। ज्येष्ठस्य विवाहः प्रथमं भवेत् इति हि सम्प्रदायः। एषः एव धर्मः। अन्यच्च तस्य दर्पणः यदि न स्यात् तर्हि अहं कुत्र बद्धा आसम् इति ज्ञानम् एव असाध्यम् अभविष्यत्। तादृशज्ञानं विना द्वितीयस्य अश्वः तृतीयस्य अङ्गुलीयकं वा अकिञ्चित्करम् एव अभविष्यत्। अतः ज्येष्ठम् एव अहं परिणेतुम् इच्छामि। मम अन्वेषणे अग्रजस्य साहाय्यं यथा कृतं तथैव इतःपरं राज्यशासने अपि भीमः सेनापतिरूपेण, सोमः मन्त्रिरूपेण च साहाय्यं कुरुताम्। एवं करणेन कस्यापि विषये अन्याय्यम् आचरितं न भवति इति मम अभिप्रायः" इति।

राजकुमार्याः एषः प्रस्तावः सर्वेषाम् अनुमतः अभवत्। अल्पे एव काले राम-वसन्तसेनयोः विवाहः सवैभवं सम्पन्नः। तस्मिन् एव समये भीमः सेनापतिरूपेण, सोमः मन्त्रिरूपेण नियुक्तौ जातौ।

पुत्राणां प्रगत्या गोपालः आत्मानं धन्यं भावितवान्।






आरभ्य स्थगितः, पुनः अनुवर्तितः यज्ञः परिसमाप्तः। यज्ञसमाप्त्यङ्गतया वस्त्राणि, धान्यानि, धनं च कृष्णेन वितीर्णानि। अन्नसन्तर्पणम् अपि कृतम्। अर्जुनसात्यकि-प्रभृतिभिः पञ्चाशत्सङ्ख्याकैः मित्रैः सह उपविश्य कृष्णः आनन्देन वार्तालापं कुर्वन् भोजनं कृतवान्। कृष्णस्य आत्मीयतां स्मरन्तः सर्वे तृप्तिं प्रकटितवन्तः।

एतदनन्तरं सभायां सर्वे उपविश्य अनौपचारिकतया वार्तालापं कृतवन्तः। तत्समये अर्जुनः कृष्णं पृष्टवान्– "कृष्ण! मया एकं तु न ज्ञातं यत् ते ब्राह्मणपुत्राः किमर्थम् अपहृताः इति। ते केन अपहृताः? कुत्र गोपिताः आसन् ते? किं रहस्यम् एतत्? अहं भवता सहैव आगतवान् चेदपि किमपि ज्ञातुं न शक्तवान्" इति।

"अर्जुन! समग्रसृष्टेः मूलकारणं परमेश्वरः मां द्रष्टुम् इच्छन् तथा व्यवहृतवान्। ब्राह्मणसम्बन्धिनि कार्ये अहं कदापि औदासीन्यं न प्रदर्शयामि इति सः जानाति। अतः एव एकैकशः ब्राह्मणशिशून् अदृश्यान् कृतवान्। तस्य अपेक्षायाः पूरणार्थम् अहं समुद्रम् अतिक्रम्य पर्वतानां मध्ये गत्वा तस्य दर्शनं कृतवान्" इति उक्तवान् कृष्णः।

एतत् श्रुत्वा अर्जुनः तृप्तः अभवत्। एतदनन्तरं सः स्वराज्यं प्रतिगत्य अग्रजं धर्मराजं प्रवृत्तं समग्रं निवेदितवान्। सामान्येन द्रष्टुम् अशक्यं कैलासपर्वतं कृष्णेन सह गतः अर्जुनः दृष्ट्वा आगतवान् इति वार्ता

२२. कैलासं प्रति कृष्णस्य गमनम्।



श्रुत्वा इतरे पाण्डवाः अपि सन्तोषं प्रकटितवन्तः।

कदाचित् रुक्मिणी कृष्णम् उक्तवती– ''प्रद्युम्नप्रभृतीन् पुत्रान् प्रसूतवती अहम्। तथापि पुत्रप्राप्तिरूपा इच्छा न शान्ता। भवादृशम् एव अपरं पुत्रं प्रसवितुम् इच्छामि अहम्'' इति।

''अस्तु तावत्, शङ्करम् आराधनेन सन्तोष्य भवत्याः पुत्रप्राप्तीच्छां पूरयिष्यामि। तपसा अलभ्यं किमपि नास्ति खलु? हिमालयं गत्वा तत्र शिवस्य आराधनं कर्तुम् इच्छामि। मध्येमार्गं बदरिकावने स्थिताः तपोधनाः अपि द्रष्टव्याः मया। एतेन बहूनि शुभकार्याणि सम्भवन्ति। अतः अहं कैलासं प्रति गमिष्यामि। भवती अत्रैव तिष्ठन्ती शिवाराधनं कुर्वती मम आगमनस्य प्रतीक्षां करोतु'' इति उक्तवान् कृष्णः।

रुक्मिणी एतत् सन्तोषेण अङ्गीकृतवती। अनन्तरदिने कृष्णः, उषःकाले नित्यकर्माणि समाप्य बलरामः, सात्यकिः, उग्रसेनः, कृतवर्मा, उद्धवः इत्यादीन्, अन्यान् यादवप्रमुखान् च प्रति वार्तां प्रेषितवान् यत् सर्वे सभाभवनं प्रति आगच्छेयुः इति।

अल्पे एव काले सर्वे सभाभवने सम्मिलिताः। कृष्णः तत्र उपस्थितान् सर्वान् नमस्कृत्य दृष्टिपातेन सर्वान् अनुगृह्णन् एवम् उक्तवान्–

''प्रमुखं कञ्चन विषयं वक्तुम् इच्छन् भवतः सर्वान् आहूतवान् अस्मि इति विषयः भवद्भिः तर्कितः एव स्यात्। सः विषयः कः इत्यत्र भवतां कुतूहलम् अपि स्यात्। एतावता मया प्रमुखाणां विरोधिनां संहारः कृतः अस्ति। इतः परम् एकः एव संहरणीयः शत्रुः अस्ति। तस्य च नाम पौण्ड्रः इति। सः धैर्यवान् पराक्रमी च। मम विषये तस्य महान् कोपः अस्ति। तस्य संहारेण केवलं मम विजयः साधितः भविष्यति। इदानीम् अहं मम वैयक्तिककार्यस्य निमित्तं कैलासं गच्छन् अस्मि। मम निर्गमनस्य अनन्तरं पौण्ड्रः अस्माकं नगरस्य उपरि आक्रमणं कुर्यात्। सः प्रपञ्चे यादवानां नाम अपि न भवेत् इति अभिलषति। तथा कर्तुं शक्तिः अपि अस्ति

तस्य। अतः जागरूकतया अहोरात्रं नगरस्य रक्षणं करणीयं भवद्भिः। नगरद्वाराणां समीपे विशेषरक्षणव्यवस्था भवतु। अनुमतिं विना कोऽपि अन्तः न आगच्छेत्, बहिः न गच्छेत् वा। चतुरङ्गसेना सदा सन्नद्धा भवतु। आयुधानि सर्वाणि निशितानि तिष्ठन्तु। सर्वासु दिक्षु अवधानं भवतु। भवन्तः एतस्य नगरस्य रक्षणे समर्थाः इति विश्वसिमि अहम्" इति।

अनन्तरं कृष्णः सात्यकिं पृथक् आहूय उक्तवान्– "एतस्य नगरस्य रक्षणस्य महाभारः प्राधान्येन भवतः उपरि अस्ति। यादवानाम् ऐश्वर्यस्य गौरवस्य च रक्षकः भवान् एव" इति।

"भवतः अनुग्रहः, बलरामस्य आश्रयः च यदि अस्ति तर्हि अहं यत्किमपि साधयितुं शक्नोमि। भवान् निश्चिन्तः सन् गच्छतु। पौण्ड्रः किं, स्वयम् इन्द्रः एव दिक्पालकैः समेतः देवसैन्यं स्वीकृत्य आगत्य आक्रमणं करोति चेदपि अहं भीतः न भवामि" इति उक्तवान् सात्यकिः।

कृष्णः उद्धवं दृष्ट्वा उक्तवान्– "गुरुवर्य! बुद्धिबलेन बृहस्पतिसमं भवन्तम् उद्दिश्य वक्तव्यं किमपि नास्ति। पराक्रमशालिनः यादवाः वीरावेशवशात् अकार्यं किमपि यथा न कुर्युः तथा नियमनं भवतः कार्यम्" इति।

एतदनन्तरं कृष्णः उग्रसेनं, बलरामम्, अन्यान् यादवप्रमुखान् च तत्तदुचितम् उक्त्वा गरुत्मन्तं स्मृतवान्।



अनन्तरक्षणे एव गरुत्मान् कृष्णस्य पुरतः उपस्थितः अभवत्।

कृष्णः तं मन्दहासेन स्वागतीकृत्य कैलासगमनविचारम् उक्तवान्, तम् आरुह्य उपविष्टवान् च।

गरुत्मान् आकाशमार्गेण गच्छन् ईशान्यदिशम् अनुसृतवान्। यावत् सः दृष्टिपथात् च्युतः न जातः तावत् तं दृष्टवन्तः द्वारकावासिनः।

द्वारकातः निर्गतः कृष्णः बदरिकावने अवतीर्णः। तत्रत्याः ऋषयः कृष्णं परमया प्रीत्या स्वागतीकृतवन्तः। कृष्णः तद्दिने रात्रौ

तत्रैव स्थितवान्।

प्रायः मध्यरात्रसमये, तस्य वनस्य वैशिष्ट्यकारणात् इव, कृष्णः तस्मिन् वने सञ्चरणीयम् इति इच्छां प्राप्तवान्। प्रबलया तया इच्छया प्रेर्यमाणः सः शयनात् झटिति उत्थाय गत्वा वने दीर्घकालं यावत् सञ्चारं कृतवान्।

अव्यक्तया कयाचित् शक्त्या प्रेर्यमाणः इव सः वने कस्मिंश्चित् परमरमणीये प्रदेशे ध्यानमग्नः सन् समाधिस्थितिं प्राप्तवान्।

तत्समये अरण्यस्थाः सहस्रशः पिशाचाः वन्यमृगान् अनुधावन्तः तत्र आगतवन्तः। तेषां पिशाचानां नायकः घण्टाकर्णः इति। घण्टाकर्णः तदीयः अनुजः च कृष्णस्य समीपम् आगत्य पृष्टवन्तौ – "कः भवान्? दर्शनेन ज्ञायते यत् कोमलशरीरः भवान् सम्पन्नकुले जातः इति। अत्र किमर्थम् आगतः? भवान् देवजातीयः, उत राक्षसजातीयः?" इति।

"अहं यदुवंशीयः क्षत्रियः। दुष्टदण्डनं शिष्टरक्षणं च मम कार्यम्। शङ्करं साक्षात्कर्तुम् अहं कैलासं प्रति प्रस्थितवान्। भवन्तः के? एतत् सज्जनानां वसतिस्थलम्। अत्र कस्यापि जन्तोः हिंसा नाम्ना अपि न भवेत्। भवन्तः मृगपक्षिणां मारणार्थम् अत्र आगताः इति भाति। एतत् सर्वथा अनुचितम्। एतत्प्रदेशे अहं हिंसां किञ्चिदपि न सहे। अतः भवन्तः इतः मौनं प्रतिगन्तुम् अर्हन्ति" इति उक्तवान् कृष्णः।

"घण्टाकर्णः नाम अहं, मम अनुजः एषः च



विष्णुभक्तौ। एते सर्वे मम अनुचराः। अहं धनाधिपतेः किङ्करः अस्मि। विष्णुपूजार्थम् एव अहं मृगाणां मारणं करोमि। देवकार्यार्थं कृतं कदापि हिंसा न भवति। मम आराध्यदेवः विष्णुः वसुदेवस्य पुत्ररूपेण कृष्णनाम्ना द्वारकायां जन्म प्राप्तवान् इति श्रुतम्। तस्य दर्शनार्थं प्रस्थितः अहम् उपायनरूपेण एतान् पशून् नयन् अस्मि" इति उक्त्वा घण्टाकर्णः कृष्णस्य पार्श्वे एव आन्त्रादिकं प्रसार्य तदुपरि उपविश्य करौ योजयित्वा इष्टदेवस्य ध्याने मग्नः जातः।

घण्टाकर्णस्य व्यवहारेण कृष्णः नितरां जुगुप्सितः। 'मम भक्तोऽपि एषः जुगुप्सावहं पैशाचकर्म आचरन् अस्ति' इति भावितवान् कृष्णः।

नेत्रे निमील्य ध्याने निमग्नस्य घण्टाकर्णस्य मनसि स्वस्य रूपं यथा दृश्येत तथा कृतवान् कृष्णः। घण्टाकर्णः नेत्रे उन्मील्य आश्चर्येण पश्यति। पुरतः साक्षात् स एव कृष्णः दृश्यते!

आनन्दपरवशः सः झटिति उत्थाय– "अहो! विष्णुं दृष्टवान्! कृष्णं दृष्टवान्!" इति उच्चैः वदन् नृत्यं कृतवान्। बहुधा कृष्णस्य स्तुतिं कृतवान् चापि।

घण्टाकर्णस्य अनन्यभक्त्या सम्प्रीतः कृष्णः तदीयां दुर्गतिं दृष्ट्वा नितरां खिन्नः। "घण्टाकर्ण! मादृशाः शवं न स्पृशन्ति। एतादृशी पूजा, नैवेद्यं च मह्यं न रोचते। एतत्सर्वं पिशाचसहजं स्यात् नाम। किन्तु मम भक्तस्य एतत् सर्वथा अनुचितम्। भवान्





मां परमया श्रद्धया आराधयति इत्यतः भवन्तं सद्गतिदानेन अनुगृह्णामि'' इति वदन् कृष्णः घण्टाकर्णं स्पृष्टवान्।

भयङ्करः पिशाचः सः कृष्णस्य स्पर्शात् दिव्यपुरुषरूपं प्राप्तवान्।

पुनः अल्पे एव काले उषःकिरणाः उदिताः। कृष्णः गङ्गानद्यां स्नात्वा बदरिकावने निवसतां मुनीनाम् अनुज्ञां प्राप्य गरुडम् आरुह्य कैलासम् उद्दिश्य प्रयाणम् अनुवर्तितवान्।

कैलासपर्वतः आसन्नः। दूरादेव तं पर्वतं दृष्ट्वा आनन्दपुलकितः कृष्णः शिवलीलां बहुधा स्मृतवान्।

मानससरोवरस्य उत्तरतीरे अवतरणं कृतं कृष्णेन। सः तत्रैव द्वादश वर्षाणि तपः कर्तुम् इच्छन् तत्रत्यानां मुनीनां परिचयं सम्पादितवान्।

अनन्तरं फाल्गुनमासे तपसः दीक्षां स्वीकृत्य कन्दमूलादिकं खादन् द्वादश फाल्गुनमासान् यापितवान् सः।

तपसः अन्तिमे दिने इन्द्रः, इतरे देवाः च कृष्णं द्रष्टुं तत्र आगतवन्तः। कृष्णः केन उद्देशेन एतावत् दीर्घं तपः कुर्वन् अस्ति इति न जानन्ति ते।

अनन्तरदिने पार्वत्या सह शिवः वृषभम् आरुह्य कृष्णस्य पुरतः प्रत्यक्षः अभवत्। तम् अनुसरन्तः पुष्पकविमानारूढः कुबेरः, मूषकवाहनारूढः विघ्नेश्वरः, मयूरवाहनारूढः कुमारस्वामी इत्यादयः आगतवन्तः। विविधानि आयुधानि धृत्वा नन्दी, महाकालः, प्रमथादयश्चापि आगतवन्तः।

कृष्णं दूरात् एव दृष्ट्वा शिवः पार्वत्या सह वृषभवाहनात् अवतीर्णः।

कृष्णः अपि शिवं दूरात् एव दृष्ट्वा उत्थाय कानिचन पदानि अग्रे गत्वा भक्त्या साष्टाङ्गं नमस्कृतवान्। अनुग्रहं काङ्क्षमाणः भक्तः इव, विद्यां प्राप्तुम् इच्छन् सच्छिष्यः इव विनयेन शिवस्य पुरतः स्थितवान् च।

शिवं विष्णुं च एकस्मिन् एव स्थले द्रष्टुम् अवकाशः लब्धः यत् तेन सर्वे देवाः सन्तुष्टाः। आत्मनः जन्म सार्थकं भावितवन्तः ते। कृष्णः शिवं साष्टाङ्गं

नमस्कृत्य बहुधा तस्य स्तुतिं कृतवान्।

शिवः महता सन्तोषेण कृष्णस्य हस्तौ गृहीत्वा एवम् उक्तवान्–

"कृष्ण! इतःपूर्वं भवान् तपसा मां सन्तोष्य एकं पुत्रं प्राप्तवान् अस्ति। पूर्वं कृतयुगे सङ्कल्पविशेषेण प्रेरितः अहं शताधिक-वर्षाणि यावत् तपः कृतवान्। तदा हिमवान् परिचर्यार्थं सखीगणसमेतां पार्वतीं मम समीपं प्रेषितवान्। तदा पार्वतीं मां च योजयितुम् इच्छन् इन्द्रः मन्मथं प्रेरितवान्। मन्मथः तु समाधिस्थितितः सचेतनावस्थां प्राप्नुवन्तं माम् उद्दिश्य मोहनास्त्रं प्रयुक्तवान्। तेन मन्मथास्त्रेण विकृतिं प्राप्य अहं पार्वतीं दृष्टवान्। सौन्दर्यखनी सा अपि एतेन पुलकिता जाता। 'एतत्सर्वं कथं सम्पन्नम्?' इति आश्चर्यम् अनुभवन् अहं परितः दृष्टिं प्रसारितवान्। तदा कुसुमायुधानि प्रयोक्तुं सज्जीभूय स्थितः मन्मथः मया दृष्टः। 'एषः दुष्टः कुतो वा न नाशनीयः' इति यावत् अहं चिन्तयन् आसं तावता मम तृतीयनेत्रात् अग्निस्फुलिङ्गाः उत्पन्नाः, ज्वाला निर्गता च। 'मन्मथः न दण्डनीयः' इति आकाशतः आक्रोशनं श्रूयते स्म। तावता अग्निज्वाला मन्मथं भस्मावशेषम् अकरोत्। ब्रह्मादिदेवाः प्रत्यक्षीभूय मन्मथः त्रिलोक्याः हितम् एव आचरन् आसीत् इति उक्तवन्तः, मन्मथस्य नाशात् सन्तापम् अनुभूतवन्तः च। ब्रह्मणः उद्देशं सफलीकर्तुम् इच्छन् अहं 'मन्मथः भवतः पुत्रः भवतु' इति वरं दत्तवान्। सः एव प्रद्युम्नः। इदानीं यत् तपः भवता कृतं तदनुगुणं फलं तु पूर्वम् एव प्राप्तं भवता। भवान् एतत्सर्वं जानीयात् एव। इतः पूर्वं ब्राह्मणकुमारव्याजेन अहं भवतः दर्शनं प्राप्तवान्। इदानीं रुक्मिण्याः अभिलाषस्य व्याजेन भवान् मम दर्शनं कृतवान्। आवयोः अभेदम् एतत्सर्वं ज्ञापयति" इति।

एवम् उक्त्वा शिवः अदृश्यतां गतवान्। तेनैव सह पार्वती प्रमथादिगणाः च अदृश्यतां गतवन्तः। कृष्णः अपि बदरिकावनं प्रत्यागतवान्।





# दुरभिमानफलम्

"शताधिकवर्षेभ्यः पूर्वं शिवपुरनामके ग्रामे वरदराजः नाम कश्चन मध्ममवर्गीयः निवसति स्म। तस्य माता विशालाक्षी। तस्य पत्न्याः नाम कोमला इति। कोमला-विशालाक्ष्योः प्रतिदिनम् अपि केनापि कारणेन कलहः भवति।

कदाचित् वरदराजः तीव्रम् अस्वस्थः जातः। औषधोपचारार्थं महत् धनं व्ययितं तेन। अन्ते सः रोगात् मुक्तः जातः। तदा कोमला उक्तवती– "अस्माभिः तिरुपतिं प्रति गन्तव्यं खलु? भवान् यदि स्वस्थः भवेत् तर्हि वेङ्कटेश्वरदर्शनं करणीयम् इति सङ्कल्पितवती आसम्" इति।

तदा तत्रैव पार्श्वे दधिमथनं कुर्वती आसीत् विशालाक्षी। सा पुत्रम् उक्तवती– "मया अपि तथैव सङ्कल्पितम् आसीत्। अतः सर्वे गच्छाम तावत्" इति।

वरदाराजः तिरुपतिगमनप्रस्तावं श्रुत्वा क्षणकालं दिग्भ्रान्तः। तथापि 'परस्परभिन्नस्वभावयुते माता पत्नी च भिन्नदेवयोः दर्शनं न सङ्कल्पितवत्यौ' इति सः मनःसमाधानं प्राप्तवान्।

सः मित्रस्य सकाशात् ऋणरूपेण धनं स्वीकृत्य तिरुपतिगमनार्थं सन्नाहं कृतवान्। ते त्रयः तिरुपतिं गत्वा पर्वतमूलं प्राप्तवन्तः। भाटकशिबिकया ते पर्वतम् आरुह्य वेङ्कटेश्वरदर्शनार्थं गतवन्तः।

वस्तुतः इतः वरदराजस्य क्लेशः आरब्धः। तस्य पत्नी गमनसमये यावन्तः देवाः दृश्यन्ते तेभ्यः सर्वेभ्यः धनं समर्पितवती। स्नुषायाः एतं व्यवहारं दृष्ट्वा स्वयम् अपि सर्वेभ्यः धनं समर्पयितुम् उद्युक्ता विशालाक्षी। एवं स्पर्धाभावेन धनं समर्पयन्त्योः तयोः व्यवहारेण वरदराजः



खिन्नः। किन्तु किमपि वक्तुं न शक्नोति सः। अतः विना वचनं यावत् पृष्टं तावत् धनं दत्तवान् सः। देवदर्शनं समाप्य ते प्रतिप्रयाणम् आरब्धवन्तः।

अधिकदूरं गन्तुम् अशक्ता विशालाक्षी पुत्रम् उक्तवती– "अवतरणार्थं शिबिकां व्यवस्थापयतु" इति।

"हा हन्त! मम पादौ निष्क्रियौ जातौ!" इति उद्गारं प्रकटितवती कोमला।

उभयोः वचनं श्रुत्वा वरदराजः कोपेन उक्तवान्– "शिबिका केवलं पर्याप्ता, उत डिण्डिमादिवाद्यानां छत्रचामराणां च व्यवस्था अपि आवश्यकी? उभे अपि मम समीपे स्थितं धनं स्पर्धाभावेन देवानां पुरतः स्थितेषु धनभाण्डेषु पातितवत्यौ। इदानीं मम समीपे धनम् एव नास्ति। इदानीं पादाभ्यां गमनम् एव शरणम्। यदि तत् न शक्यते तर्हि लुण्ठनं कृत्वा अधः गच्छताम्। तदा तु अधिकस्य पुण्यस्य प्राप्तिः" इति।

"धनं नास्ति इति पूर्वम् एव कुतो वा न उक्तम्? गले किं स्थितम् आसीत्?" इति असमाधानेन पृष्टवती कोमला।

"सत्यं, सर्वं वक्तव्यम् आसीत्। यजमानस्य सम्पादनं कियत् इति सम्यक् ज्ञात्वा खलु स्त्रीभिः व्ययः करणीयः? अविद्यमानं धनं कुतः आनयामि? धनेन पुण्यं क्रेतुं शक्यते इति भावयतः भवत्यौ। हृदयं निर्मलं स्थापनीयम् इति विस्मरतः। इदानीं पादाभ्यां गमनं विना न अन्या गतिः" इति वदन् अग्रे गतवान् वरदराजः। गत्यन्तराभावात् विशालाक्षी कोमला च तम् अनुसृतवत्यौ।

पर्वतस्य अवतरणस्य अनन्तरं वरदराजः स्वसमीपे अवशिष्टेन अल्पेन धनेन शकटं निश्चितवान्। अनन्तरदिने मध्याह्नाभ्यन्तरे ते गृहं प्राप्तवन्तः।

"किञ्चित् पाकं करोतु भोः! अहं स्थातुम् अपि न शक्नोमि" इति स्नुषाम् उक्तवती विशालाक्षी।

"भवती एव पाकं करोतु" इति उक्तवती कोमला। इतरेषु दिनेषु तु तयोः कार्यविभागः निश्चितः आसीत्। अद्य तु 'भवती करोतु' 'भवती करोतु' इति परस्परं वदन्त्यौ कोपेन

मुखं परिवर्त्य उपविष्टवत्यौ।

कुत्रापि गतः वरदराजः किञ्चित्कालानन्तरं प्रत्यागतः। पाकः न आरब्धः एव इति ज्ञात्वा सः कोपेन पत्नीं पश्यन्– "अये चण्डि! अल्पवयस्कया भवत्या किञ्चित् विनयेन व्यवहर्तव्यं खलु?" इति उक्तवान्। पुनः मातरं पश्यन्– "अम्ब! ज्येष्ठा भवती अपि एवम् अविवेकेन व्यवहरति खलु? का इयम् अहितकरी स्पर्धा? उभे अपि किमर्थं माम् एवं पीडयतः? एतदपेक्षया जातमात्रं मां भवती मारितवती चेदेव वरम् अभविष्यत्। किं करोमि? सर्वं मम ललाटलिखितम्" इति उक्त्वा कोपेन ततः निर्गतवान्।

श्वश्र्वाः पुरतः पतिः यत् निन्दितवान् तेन कोमला नितरां खिन्ना। 'स्नुषायाः पुरतः मां निन्दितवान् एषः' इति विशालाक्षी अपि अतीव खिन्ना।

किञ्चित्कालानन्तरं कोमला उत्थाय– "अहं मम मातृगृहं गच्छामि" इति वदन्ती वस्तूनि स्यूते स्थापयितुम् आरब्धवती। विशालाक्षी अपि – "अहं तावत् मम द्वितीयपुत्रस्य गृहं गच्छामि" इति वदन्ती उत्थितवती। काकतालीयं नाम तयोः उभयोः अपि गन्तव्यं स्थानम् अभिन्नम् आसीत्।

उभे अपि गृहात् प्रस्थितवत्यौ। किन्तु कीलनविषये तयोः मध्ये वादविवादः प्रवृत्तः। कया कीलनीयम् इति तु अन्ते अपि न निश्चितम्। अतः ते कीलनम् अकृत्वा एव ततः प्रस्थितवत्यौ।

नगरं प्रति गमनार्थं ते द्वे अपि एकत्र





मार्गपार्श्वे उपविष्टवत्यौ। अल्पे एव काले कश्चन अश्वशकटः आगतः। उभे अपि एकम् एव स्थानं गन्तुम् इच्छतः इत्यतः ते शकटे उपवेशितवान् शाकटिकः।

उभे अपि शकटम् आरुह्य पृष्ठभागे उपविष्टवत्यौ। किञ्चिद्दूरं गमनानन्तरं शाकटिकः सूचितवान् यत् अन्यतरा किञ्चित् अग्रे उपविशतु इति।

"भवती अग्रे अपसरतु" इति श्वश्रूम् उक्तवती कोमला। "न शक्यते। भवती एव अपसरतु किञ्चित् अग्रे" इति उक्तवती विशालाक्षी। अत्रान्तरे शिलामये मार्गे गच्छन् शकटः पृष्ठभागे भाराधिक्यात् वलितः अभवत्। श्वश्रूः स्नुषा च पार्श्वस्थायां लघुनद्यां पतितवत्यौ।

अनन्तरं ते "हा हन्त! राम! कृष्ण! मुकुन्द!" इति वदन्त्यौ कथञ्चित् उत्थाय समीपस्थस्य वृक्षस्य अधः परस्परं विमुखम् उपविष्टवत्यौ।

पञ्चदश निमेषाः एवम् एव अतीताः। अनन्तरं विशालाक्षी शाकटिकम् आहूय गृहस्य स्वरूपादिकम् उक्त्वा— "मम पुत्रम् अत्र आनयतु भोः" इति प्रार्थितवती। शाकटिकस्य कोपः आसीत् एव। तथापि सः स्त्रीविषयिण्या अनुकम्पया प्रेरितः सन् ते निन्दन् गत्वा अर्धघण्टाभ्यन्तरे वरदराजम् आनीतवान्।

पुत्रं दृष्ट्वा अश्रूणि स्रावयन्ती विशालाक्षी उक्तवती— "पुत्र! भवतः पत्नी मम अस्थिभङ्गस्य कारणम् अभवत् भोः" इति।

"मां किमर्थं निन्दति भवती? शाकटिकस्य वचनं पालितं चेत् एवम् अभविष्यत् वा? हा हन्त! मम कटौ महती वेदना!" इति आक्रोशनं कृतवती कोमला।

पत्न्याः मातुः च मूर्खतां दृष्टवतः वरदराजस्य कोपः उद्गच्छति, तथापि नयोः दयनीयां परिस्थितिं दृष्ट्वा सः नितरां खिन्नः। सः पत्नीं मातरं च उद्दिश्य उक्तवान्— "अविवेकेन कीदृशं फलं लभ्यते इति ज्ञातं खलु इदानीम्? इतः परं वा निरर्थकं दुरभिमानं परित्यज्य सौजन्येन व्यवह्रियताम्" इति।

एतत् श्रुत्वा कोमला लज्जया शिरः

अवनमय्य स्थितवती। विशालाक्ष्याः मुखात् तु अश्रूणि एव आगतानि। "आस्तां तावत् एतत्, गृहं गच्छाम। शाकटिकं शकटं परिवर्तयितुं सूचयतु" इति उक्तवती सा।

"इतः परं गृहे किं वा भवेत्? परस्परं निन्दन्त्यौ भवत्यौ गृहस्य कीलनम् अकृत्वा गतवत्यौ। मम प्रत्यागमनात् पूर्वं चोराः गृहे स्थितानि सर्वाणि वस्तूनि नीतवन्तः आसन्। अतः यत् स्थलम् उद्दिश्य प्रस्थितं तत्रैव गच्छतां भवत्यौ। गृहं प्रति गमनेन न किमपि प्रयोजनम्" इति उक्तवान् वरदराजः।

'आवयोः अविवेकस्य कारणतः सर्वस्वं नष्टम्' इति चिन्तितवत्यौ श्वश्रूः स्नुषा च। तयोः मनः पश्चात्तापेन दग्धम्। "मम अविवेकेन एव एवं प्रवृत्तम्। कनिष्ठैः दोषः कृतः चेदपि ज्येष्ठया मया विवेकः न परित्यक्तव्यः आसीत्। धिक् मम दुरभिमानम्" इति वदन्ती रुदितवती विशालाक्षी।

"कनिष्ठायाः मम विनयः शोभते स्म। अहितकरः स्पर्धाभावः प्रदर्शितः मया। अतः एव मया इदानीम् एतादृशी वेदना अनुभूयते। मां क्षाम्यतु कृपया" इति वदन्ती रुदती च कोमला श्वश्रूं नमस्कृतवती।

"उत्तिष्ठतु। रोदनं मास्तु। यत् प्रवृत्तं तत् मङ्गलाय एव" इति वदन्ती विशालाक्षी स्नुषाम् उत्थापितवती।

पत्न्या मात्रा च विवेकः प्राप्तः इति ज्ञात्वा सन्तुष्टः वरदराजः हसन् उक्तवान्— "वस्तुतः तु 'गृहे चौर्यं प्रवृत्तम्' इति मया असत्यम् उक्तम्। इतः परं वा गृहे सौहार्दभावः भविष्यति इति भावयामि अहम्। शकटारोहणं कुरुताम्। गृहं गच्छाम तावत्" इति।

"अये धूर्त! असत्यं वदन् मां भायितवान् खलु भवान्" इति वदन्ती विशालाक्षी प्रीत्या पुत्रस्य शिरः अङ्गुल्या ताडितवती।

"असत्यकथने मिथ्याभिनये च असदृशं सामर्थ्यम् आर्यपुत्रस्य" इति मन्दहासपूर्वकं वदन्ती कटाक्षेण पतिं दृष्टवती कोमला।






# जलराक्षसः

कश्चन निर्धनः पुरुषः कस्यचित् सरोवरस्य तीरे कुटीरं निर्माय पत्नीपुत्रैः सह निवसति स्म। प्रतिदिनं सः अन्येषां कृषिक्षेत्रेषु कार्यं कुर्वन् प्राप्तेन धनेन जीवननिर्वहणं करोति स्म। एतस्य निर्धनस्य त्रयः पुत्राः। मातापित्रोः मरणानन्तरं तस्मिन् गृहे विभागप्रस्तावः आरब्धः। ज्येष्ठः पुत्रः उक्तवान्– "एतत् गृहं, गृहपरिसरः च मम" इति।

"गृहे स्थितानि वस्तूनि सर्वाणि मम" इति उक्तवान् द्वितीयः पुत्रः।

"एवं तर्हि मह्यं किम्?" इति पृष्टवान् तृतीयः पुत्रः।

"भवते? गृहं गृहपरिसरः च मम। अन्तःस्थानि वस्तूनि अनुजस्य। एतदतिरिच्य यद्यत् भवेत् तत्सर्वं भवते" इति उक्तवान् ज्येष्ठः।

तृतीयः पुत्रः गृहे सर्वत्र अन्वेषणं कृतवान्। गृहस्य कोणे काचित् रज्जुः आसीत्। ताम् प्रदर्शयन्– "एताम् अहं स्वीकरोमि वा?" इति पृष्टवान् अनुजः।

"अस्तु स्वीकरोतु तावत्" इति उक्तवन्तौ अग्रजौ। तृतीयः पुत्रः तां रज्जुं स्वीकृत्य सरोवरतीरं गतवान्। सः सरोवरतीरे कस्यचित् वृक्षस्य अधः उपविश्य इतस्ततः पश्यन् अग्रे किं करणीयम् इति चिन्तयन् आसीत्।

तावता कश्चन चिक्रोडः तेन दृष्टः। 'पाशं निर्माय विविधान् जन्तून् गृह्णामि चेत् तेषां चर्म विक्रीय जीवनं कर्तुं शक्यते' इति आलोचितवान् सः। अतः रज्ज्वा पाशं निर्माय तं चिक्रोडं गृहीतवान्। शलाकाभिः लघुपञ्जरं निर्माय तं चिक्रोडं पञ्जरस्य अन्तः स्थापितवान् च। सः एतेन एव क्रमेण एकं शशम् अपि गृहीत्वा अन्यस्मिन् पञ्जरे स्थापितवान्। एतावता समीपे स्थितां गुहां

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



प्रविशन् कश्चन भल्लूकः अपि तेन दृष्टः।

'पाशेन भल्लूकः ग्रहीतव्यः' इति निश्चित्य तदनुगुणं पाशं रचयन् उपविष्टवान् सः। तावता सरोवरे जातः कश्चन जलशब्दः तेन श्रुतः।

शब्दस्य दिशि एषः दृष्टिं प्रसारितवान्। शरीरस्य अर्धं भागं जलात् उपरि आनीय कस्याश्चित् शिलायाः आधारेण स्थित्वा एतम् एव तीक्ष्णदृष्ट्या पश्यन् आसीत् कश्चन बालकः।

तस्मिन् सरोवरे कश्चन जलराक्षसः निवसति स्म। सः सदा जलस्य अन्तः एव निवसति। कोऽपि यदि सरोवरतीरम् आगच्छेत् तर्हि तं मायोपायेन जले अवतार्य अन्तः आकृष्य नयति। एवं बहवः जनाः तेन आकृष्य नीताः। ते एव तस्य आहारः। तैः धृतानि आभरणानि जलराक्षससमीपे राशिरूपेण सन्ति इति जनाः वदन्ति स्म। एतत्सर्वं श्रुतवान् आसीत् एषः तृतीयपुत्रः।

'शिलायाः आधारेण स्थित्वा पश्यन् एषः बालकः प्रायः जलराक्षसस्य पुत्रः स्यात्' इति तर्कितवान् तृतीयपुत्रः।

"क भवान्? सरोवरतीरे उपविश्य किं कुर्वन् अस्ति?" इति पृष्टवान् सः बालकः।

"पाशसाहाय्येन एतत् सरोवरं ग्रहीतुम् इच्छामि। मम उपयोगार्थम् आवश्यकम् एतत्" इति उक्तवान् तृतीयपुत्रः।

सः जलराक्षसपुत्रः झटिति जले निमज्य पितुः समीपं गत्वा तीरे युवकस्य दर्शनं, तस्य वचनं च निवेदितवान्।

"एवं वा? तादृशः सजीवं न तिष्ठेत्। केनापि उपायेन तं वृक्षारोहणस्पर्धार्थं प्रेरयतु। यदा सः श्रान्तः इव लक्ष्यते तदा तं सरोवरे पातयतु। अनन्तरं यत् करणीयं तत् अहं करोमि" इति पुत्रम् उक्तवान् जलराक्षसः।

जलराक्षसपुत्रः जलात् उपरि आगत्य तृतीयपुत्रम् उक्तवान्–" भवता सह स्पर्धार्थम् अहम् आगतवान्। वृक्षारोहणस्पर्धा भवतु प्रथमम्। आगच्छतु तावत्" इति।

"तदर्थं मम समयः कुत्र? कार्यव्यापृतं मां न पश्यति वा भवान्? यदि स्पर्धाम् इच्छति तर्हि मम एतम् अनुजं प्रेषयामि। तेन सह



स्पर्धताम्" इति उक्तवान् तृतीयपुत्रः।

"सः कुत्र?" इति पृष्टवान् जलराक्षसपुत्रः।

तृतीयःपुत्रः स्वपार्श्वे स्थितं चिक्रोडं बहिः प्रेषितवान्। यावत् जलराक्षसपुत्रः वृक्षारोहणस्य आरम्भं कृतवान् तावता चिक्रोडः वृक्षाग्रं प्राप्तवान् आसीत्।

जलराक्षसपुत्रः पितुः समीपं गत्वा प्रवृत्तं समग्रं निवेदितवान्। "एवं तर्हि भवान् तं धावनस्पर्धार्थं प्रेरयतु। सरोवरं परितः धावनं भवतु। यदा सः श्रान्तः भवति तदा तं सरोवरे पातयतु। अग्रिमं कर्याम् अहं करिष्यामि" इति सूचितवान् जलराक्षसः।

जलराक्षसपुत्रः पुनरपि उपरि आगत्य तृतीयपुत्रं धावनस्पर्धार्थम् आहूतवान्।

"कार्यम् अस्ति मम इति तदानीम् एव उक्तं खलु मया?। आवश्यकं चेत् मम अपरम् अनुजं प्रेषयामि" इति वदन् तृतीयपुत्रः पञ्जरस्थं शशं बहिः आनीतवान्। शशः क्षणमात्रेण सरोवरं परितः धावन् कुत्रापि अदृश्यः अभवत्।

जलराक्षसपुत्रः पुनः अपि पितु समीपं गत्वा प्रवृत्तं निवेदितवान्। "अहो, आशाचर्यकरम् एतत्! इदानीं भवान् तं मल्लयुद्धार्थम् आह्वयतु। तं ताडयित्वा बलहीनं कृत्वा सरोवरे पातयतु" इति सूचितवान् जलराक्षसः।

एतदनुसारं पुनः उपरि आगतः जलराक्षसपुत्रः– "भोः, मल्लयुद्धार्थम् आगच्छतु" इति तृतीयपुत्रम् आहूतवान्।

"अये! पश्यति खलु सर्वम्? मया आरब्धं कार्यम् इतोऽपि न समाप्तम्। तत्र दृश्यते खलु गुहा, तस्यां मम पितामहः तिष्ठति। प्रथमं तेन सह युद्धं करोतु। तत्र जयः प्राप्तः चेत् अहम् एव मल्लयुद्धार्थम् आगमिष्यामि" इति उक्तवान् तृतीयपुत्रः।

जलराक्षसपुत्रः गुहां प्रविश्य भल्लूकं बलात् आकृष्टवान्। कुपितः भल्लूकः त गृहीत्वा सम्यक् अपीडयत्। तं व्रणितम् अपि अकरोत्। कथञ्चित् ततः विमोचनं प्राप्य पलायितः जलराक्षसपुत्रः पितरं प्रवृत्तं सर्वं निवेदितवान्।

एतदपि श्रुत्वा जलराक्षसः नितरां भीतः

''सः पुरुषः कीदृशः विशिष्टः स्यात्? तदीयौ अनुजौ तु धावने, वृक्षारोहणे, भवन्तं पराजितं कृतवन्तौ। तस्य पितामहः तु भवन्तं निष्पीडितवान्। एतादृशः जनः निश्चयेन पाशेन सरोवरं ग्रहीतुं शक्नुयात्। मानवानां प्रायः सुवर्णविषये मोहः भवेत् एव। अतः भवान् तं पृच्छतु– कियत् सुवर्णं दत्तं चेत् एतस्य सरोवरस्य ग्रहणोद्यमं परित्यजति इति'' इति उक्तवान् जलराक्षसः।

जलराक्षसपुत्रः तृतीयपुत्रं दृष्ट्वा पित्रा यथा सूचितं तथा पृष्टवान्।

''सुवर्णं प्रथमम् आनयतु। अनन्तरं वदामि'' इति सूचितवान् तृतीयपुत्रः।

जलराक्षसपुत्रः किञ्चित् सुवर्णम् आनीय दत्तवान्। ''एतावदेव वा?'' इति पृष्टवान् तृतीयपुत्रः। जलराक्षसपुत्रः पुनः किञ्चित् सुवर्णम् आनीय दत्तवान्। तृतीयपुत्रः पुनः असमाधानं प्रकिटतवान्। अन्ते जलराक्षसः समग्रं सुवर्णं प्रेषितवान्।

''अस्माकं समीपे यत् अस्ति तत् समग्रम् अर्पितम्। एतावता तृप्तः भवतु कृपया'' इति प्रार्थितवान् जलराक्षसपुत्रः।

''अस्तु तावत्'' इति उक्त्वा सुवर्णं स्वीकृत्य गृहं गतवान् तृतीयपुत्रः।

अनुजेन आनीतम् ऐश्वर्यं दृष्ट्वा आश्चर्यं प्रकटयन्तौ अग्रजौ पृष्टवन्तौ– ''कुतः आनीतम् एतत्?'' इति।

''रज्जोः साहाय्येन सम्पादितम् एतत्। एषा रज्जुः महिमान्विता अस्ति'' इति उक्तवान् तृतीयपुत्रः।

''तर्हि एतत् गृहं, गृहस्थानि वस्तूनि च भवान् एव स्वीकरोतु। एतां रज्जुं आवयोः कृते ददातु'' इति सूचितवन्तौ अग्रजौ। अनुजः रज्जुम् अग्रजाभ्यां दत्तवान्।

अनन्तरं तृतीयपुत्रः आत्मना आनीतेन ऐश्वर्येण गृहं पुनः निर्माय कृषिक्षेत्रादिकं क्रीतवान्। धेनवः अपि क्रीताः। सुन्दरीं काञ्चित् परिणीय सुखेन जीवितवान् सः।

रज्जुं स्वीकृत्य गतयोः तयोः अग्रजयोः का गतिः जाता इति अद्यावधि केनापि न ज्ञायते।





# योग्यताज्ञानम्

जयसिंहः नाम राजा पूर्वं मगधदेशं परिपालयन् आसीत्। प्रतिदिनं रात्रौ सः आन्तरङ्गिकेण गुणनिधिना सह बेषान्तरं धृत्वा राजधान्यां सञ्चरति। कदाचित् सः एवं नगरसञ्चारार्थं प्रस्थितवान्।

एवं सञ्चारसमये नगरसीमायां केचन लुण्ठाकाः आक्रमणं कृतवन्तः। राजा गुणनिधिः च खड्गं हस्तेन स्वीकुर्वन्तौ प्रतिरोधं प्रदर्शितवन्तौ। किन्तु चोराणां बलम् अधिकम्। ते राजानं गुणनिधिं च अल्पे एव काले निरायुधौ कृतवन्तः। तयोः समीपे धनम् आभरणानि वा न आसन्। अतः अन्वेषणं कृत्वा निराशाः लुण्ठाकाः एतौ निन्दन्तः ततः निर्गतवन्तः।

चोरैः यत् अपमाननं कृतं तत् स्मरन् चिन्ताक्रान्तः अस्ति राजा जयसिंहः। अनन्तरदिने सः राजसभायां सभ्यान् उद्दिश्य उक्तवान्– "एतस्यां सभायां बहवः मेधाविनः सन्ति। मम कश्चन सन्देहः अस्ति। मेधाविनः एतं सन्देहं परिहरेयुः। मानवस्य योग्यता किं वेषेण निश्चीयते? कुत्रचित् महत् गौरवं प्राप्नुवन् कश्चित् अपरत्र अपमाननं प्राप्नोति। अत्र किं कारणम् इति प्राज्ञाः वदेयुः" इति।

किञ्चित्कालं यावत् सभायां मौनं प्रसृतम्। राज्ञः सन्देहस्य योग्यम् उत्तरं वक्तुं कोऽपि न सिद्धः।

तदा राज्ञः आन्तरङ्गिकः गुणनिधिः एव उत्थाय उक्तवान्– "महाराज! योग्यता गौरवं प्रापयति इति तु सत्यम् एव। तथापि तदीयं स्थानं वेषः च बहुत्र योग्यताम् आनयतः। एषा लोकरीतिः" इति।

"एतं विषयं सप्रमाणं निरूपयितुं शक्नोति वा भवान्?" इति पृष्टवान् राजा।

"अवश्यं शक्नोमि" इति सविश्वासम् उक्तवान् गुणनिधिः। अनन्तरं सः स्वकीयं राङ्कवं शिरसि उष्णीषरूपेण धृत्वा एकं सभ्यं पृष्टवान्– "एतत् किम्?" इति।

"उष्णीषम्" इति उक्तवान् सभ्यः।

गुणनिधिः तम् एव राङ्कवं स्कन्धे धृत्वा पुनः तं पृष्टवान्– "किम् एतत्?" इति।

"उत्तरीयम्" इति उक्तवान् सः सभ्यः।

गुणनिधिना आच्छादनपूर्वकं धृतं तत् वस्त्रं राङ्कवम् उक्तवान् सभ्यः। तेन आच्छाद्य यदा सुप्तवान् गुणनिधिः तदा सभ्यः उक्तवान्– "एतत् आच्छादकम्" इति।

एतदनन्तरं गुणनिधिः महाराजम् उद्दिश्य– "प्रभो! मम हस्ते स्थितम् एकमेव वस्त्रं स्थानपरिवर्तनात् विभिन्नं नाम प्राप्नोति स्म। अपरम् अपि उदाहरणं प्रदर्शयिष्यामि" इति उक्त्वा सभातः निर्गत्य एकं काष्ठखण्डं गृहीत्वा प्रत्यागतवान्।

आस्थानशिल्पिनं समीपम् आहूय तेन काष्ठेन देवताशिल्पं कारितवान्। अनन्तरं तं सभ्यं पुनरपि आहूय तस्य शिल्पस्य उपरि पादाघातं कर्तुम् उक्तवान्।

सभ्यः 'शान्तं पापम्' इति वदन् गुणनिधिम् असमाधानेन पश्यन् देवमूर्तिं भक्त्या नमस्कृत्य मौनं प्रतिगतवान्।

तदा गुणनिधिः राजानं पुनः उक्तवान्– "महाराज! देवः सर्वव्यापी इति हि वस्तुस्थितिः। तथा चेत् काष्ठखण्डे अपि देवः भवति एव। किन्तु काष्ठखण्डे देवस्य आकारः यदा दृश्यते तद एव जनाः तत्र देवत्वं भावयन्ति। एवम् एव राजा भवान् यदा किरीटवेषादिभिः युक्तः भवति तदा भवन्तं प्रजाः विशेषगौरवेण पश्यन्ति। किन्तु यदा भवान् सामान्यवेषेण भवति तदा यदि कदाचित् भवतः अपमाननं भवेत् तर्हि न तत्र विचित्रता। अत्र आश्चर्यस्य चिन्तायाः च कः अवकाशः?" इति।

गुणनिधेः वचनस्य तत्त्वं जानन् महाराजः मन्दहासं प्रकटितवान्। तदीया चिन्ता इदानीं सर्वथा अपगता आसीत्।



# रुचिकराणि आम्रफलानि

| | |
|---|---|
| मनुः - किं भोः ईश! स्यूते किं तत्? | What Eesha? What is in the bag? |
| ईशः - आम्रफलानि। पश्यतु, फलं कथम् अस्ति? | Mangoes. See if they are good! |
| म - आकारेण तु सुन्दरम्। रुचिः तु आस्वादनानन्तरम् एव ज्ञातव्या। | They are good to look at; but only after tasting you will know how good it is! |
| ई - तथा न। एतानि रुचिकराणि एव। यतः एकस्य फलस्य रुचिं दृष्ट्वा एव एतानि क्रीतानि। | No, not so, These must be tasty as I bought them only after tasting one. |
| म - एतादृशेषु विषयेषु आपणिकाः महाचतुराः। रुचिदर्शनार्थं यत् दीयते तत् मधुरं भवति। अनन्तरं दत्तानि आम्लानि भवन्ति। | The shopkeepers are very smart in such matters. What they show you will always be good. But your experience of what you buy will not be the same. |
| ई - तथा स्यात् कदाचित्। किन्तु मम आपणिकः तथा न करोति। यतः सः सुपरिचितः। | It is true sometimes, but my shop-keeper does not do that because we are close acquaintances. |
| म - जानामि भोः। सर्वेषाम् आपणिकानां समानः व्यवहारः। | I know it, but the aim of shop-keepers is business. |
| ई - स्यात् नाम। किन्तु एषः आपणिकः मां तु अद्यावधि न वञ्चितवान्। | It may be so. But this shopkeeper of mine has never cheated me so far. |
| म - तदस्तु, द्वादशकस्य किं मूल्यम्? | All right, what is the price per dozen? |
| ई - द्वादशकपरिमाणेन कः विक्रीणीते भोः? इदानीं तु किलोमानेन विक्रयणम्। एककिलोकृते अष्ट रूप्यकाणि। | Who sells now by the dozen? It is all per Kg. nowadays. Eight rupees a Kg. |
| म - अधिकं मूल्यं न वा एतत्? | Isn't it too much? |
| ई - न अधिकम्। अत्र सामान्यम् एतत्। | Don't think so That is the price here. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां अक्टोबर्-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जून्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **अयाचितम् अपि प्राप्तम् इति तोषः।**

द्वितीयचित्रम् - **याचितम् अपि न प्राप्तम् इति खेदः।**

प्रेषिका - कुमारी राजेश्वरी, टि.बि. मार्गः, अज्जम्पुरम्-५७७५४७, कर्णाटकम्।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by **B.V. REDDI** at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अक्षक्रीडा - | Game of dice |
| अङ्गुलीयकम् - | Ring |
| अनौपचारिकता - | Informality |
| अस्थि - | Bone |
| आन्त्रम् - | Intestine |
| आसन्दः - | Chair |
| इतिवृत्तम् - | Report |
| उत्तरीयम् - | Upper Cloth |
| उरः - | Chest |
| कपाटिका - | Cupboard |
| कर्णलुण्ठनम् - | Squeezing the earlobes |
| कूर्दनम् - | Jumping |
| क्ष-किरणः - | X-ray |
| ख्यापनम् - | To publicise |
| गलः - | Throat |
| चयनम् - | Selection |
| चिक्रोडः - | Squirrel |
| तण्डुलः - | Rice |
| दर्पणः - | Mirror |
| दोहदः - | Longings (of a pregnant woman) |
| द्विचक्रिका - | Bicycle |
| निगडः - | Handcuff |
| नियमनम् - | To bring round |
| निशितम् - | Sharp |
| परिचारिका - | Maid servant |
| पाञ्चालिका - | Doll |
| पाशः - | Noose |
| पुलकितः - | Thrilled |
| मण्डूकः - | Frog |
| मशकः - | Mosquito |
| मातृगृहम् - | Parental home |
| राङ्कवः - | Shawl |
| लालनम् - | Fondling |
| वक्ता - | Speaker |
| वितीर्णम् - | Distributed |
| विपरीतः - | Contrary |
| विविक्तः - | Secluded |
| विशिष्टः - | Peculiar |
| शशः - | Rabbit |
| शाकटिकः - | Cartman |
| शोभायात्रा - | Procession |
| स्फुलिङ्गः - | Spark |
| हठात् - | Suddenly |
| हस्तक्षेपः - | Involvement |

